वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६

दुःखेषु क्लेशेषु नोद्विग्नं न विचलितं मनश्चित्तं यस्य स तथा सुखेषु विविधेन्द्रियभोगेषु विगता नष्टा स्पृहा कामना यस्य स तथा वीता नष्टा रागः स्नेहो भयं भीतिः क्रोधः कोपश्च यस्य स मुनि र्मननशीलः स्थितधीः स्थितप्रज्ञ उच्यते ॥५६॥

जिस को दुःखों में उद्वेग नहीं, सुखों की स्पृहा नहीं, और राग, भय क्रोध, जिस के वीत गये हैं, ऐसा मुनि स्थितप्रज्ञ कहलाता है ॥ ५६ ॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥

यः पुरुषः सर्वत्र सर्वस्मिन्वस्तुनि न वर्ततेऽभितः सर्वतः स्नेहः प्रीति र्यस्य स तथाशुभं प्रियमशुभमप्रियञ्च प्राप्य लब्ध्वा नाभिनन्दति न प्रसीदति न च द्वेष्टि द्वेषं करोति तस्य पुरुषस्य प्रज्ञा बुद्धिः प्रतिष्ठिता स्थिरा( ज्ञेया) ॥५७॥

जो सर्वत्र आसक्ति रहित हो कर यथाप्राप्त शुभाशुभ का जिस को हर्ष शोक नहीं है उसकी बुद्धि स्थिर हुई समझो ॥ ५७ ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥

यदा यस्मिन् कालेऽयं साधकः कूर्मः कच्छपः ( स्वानि ) अङ्गानीव शिरःप्रभृति शरीरावयवानिव सर्वशः सर्वप्रकारेणे न्द्रियार्थेभ्य इन्द्रियाणामर्थेभ्यो विषयेभ्य इन्द्रियाणि चक्षुरादीनि संहरते संकोचयति तस्य प्रज्ञा बुद्धिः प्रतिष्ठिता ॥५८॥

जैसे कछुवा अपने अंगों को समेट लेता है, वैसे जिस ने अपनी सब इन्द्रियों को विषयों से हटा लिया है, उसकी बुद्धि स्थिर है ॥ ५८ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

निराहारस्याहार रहितस्य देहिनः शरीरिणो विषया इन्द्रिय विषयाः शब्दरूपादयो रसवर्जं रसं वर्जयित्वा रसं विहाय विनिव र्तन्ते विशेषेण निवर्तन्ते अस्य निराहारस्य देहिनो रसोऽपि परं परमार्थतत्त्वं दृष्ट्वा निवर्तते निवृत्तं भवति ॥५९॥

निराहारी मनुष्य के भी विषय तो निवृत्त होते हैं परन्तु रस

नहीं छूटता। स्थिरबुद्धि वाले का तो परमात्मा को देख कर रस विषयासक्ति भी छूट जाता है ॥ ५९ ॥

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः।**
**इंद्रियाणि प्रमाथीनि हरंति प्रसभं मनः ॥६०॥**

हे कौन्तेय! विपश्चितो विदुषः पुरुषस्य यततोऽपीन्द्रिय निरोधं कर्तुं यतमानस्याऽपि प्रकर्षेणमथ्नन्ति • तानि प्रमाथीनिबल-वत्तराणीन्द्रियाणि प्रसभं बलात्कारेण मनो हरन्ति विषयोन्मुखं कुर्वन्ति ॥६०॥

क्योंकि हे कौंतेय! केवल इन्द्रियों को रोक रखने से तो यह बलवान् इन्द्रियां बड़े विद्वान् का मन भी धक्के से हर लेती हैं ॥ ६० ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः।**
**वशे हि यस्येंद्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१**

सर्वाण्यशेषाणि तानीन्द्रियाणि संयम्य विषयेभ्यः सम्यक् निरोध्य युक्तो योगयुक्तो मत्परोऽहमेव परं ब्रह्म परं परायणं यस्य सः मदेकावलम्बनः सन्नासीत तिष्ठेत् हि यतो यस्य पुरुष

स्येन्द्रियाणि श्रवणादीनि वशे स्ववशे ( वर्तन्ते ) तस्य प्रज्ञा बुद्धिः प्रतिष्ठिता स्थिरा (ज्ञेया ) ॥६१॥

इस लिये सब इन्द्रियों को वश रखने के उपरान्त योगी पुरुष चित्त से भी मेरे परायण हो कर रहे, इस प्रकार जिस की इन्द्रियां मन सहितस्वाधीन हैं, उसोकी बुद्धिप्रतिष्ठित है ॥६१॥

ध्यायतो विषयान्पुंसः संङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ६२।

विषयानिन्द्रियविषयान् शब्दादीन् ध्यायत श्चिन्तयतः पुरुषस्य तेषु विषयेषु सङ्ग आसक्ति र्जायते समुत्पद्यते, सङ्गादासक्तेश्च कामस्तद्वासना जायते कामाच्च क्रोधोऽभितः साकल्येन जायते ॥६२॥

एक मात्र इन्द्रियों को रोक कर मन से विषयों का ध्यान करने वाले पुरुषों की विषयासक्ति दिन दिन बढ़ती जाती है, आसक्ति से काम ( इच्छा ) काम से क्रोध, होता है ॥६२॥

क्रोधाद्भवतिसम्मोहः सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३

क्रोधात् सम्यंङ् मोहो भवति सम्मोहात् स्मृतेः स्मरण शक्ते--

विभ्रमोविशेषेण भ्रमो भवति स्मृति भ्रंशात् स्मृतिनाशाद्द बुद्धे-र्नाशो भवति बुद्धिनाशाच्च प्रणश्यति प्रकर्षेण नष्टो भवति ॥६३

क्रोध से संमोह संमोह से स्मृति का नाश, स्मृतिनाश से बुद्धि का नाश, और बुद्धि नाश से मनुष्य का नाश होता है ॥६३॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४

तु किन्तु विधेयो वशवर्त्ती आत्मा मनो यस्य स जितमनाः पुरुष आत्मनः स्वस्य वश्यै र्वशवर्तिभिस्तथा रागः स्नेहो द्वेषोऽ-प्रीतिस्ताभ्यां वियुक्तै र्वर्जितै रिन्द्रियैः कर्णादिभि र्विषयान् शब्दा दीन् चरन् गृह्णन् प्रसाद चित्तप्रसन्नतां मधिगच्छतिप्राप्नोति ॥६४

परन्तु जिस ने चित्त में से विषयों का रागद्वेष दूर करके इन्द्रियों को वश किया है, वह स्वाधीन इन्द्रियों द्वारा विषय सेवन करे तब भी शान्ति को ही पाता है, ॥६४॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

प्रसादे सति प्रसन्नतायां सत्यामस्य जितमनसः पुरुषस्य

सर्वाणि च तानि दुःखानि सर्वं दुःखानि तेषां हानि र्नाश उप जायते भवति हि यतः प्रसन्नं चित्तं यस्य स तस्य पुरुषस्य बुद्धि राशु शीघ्रं पर्य्यवतिष्ठते स्थिरा भवति ॥६५॥

शान्ति से इस के सब दुःख नष्ट होते हैं और शान्त चित्त वाले की बुद्धि भी शीघ्र स्थिर होती है ॥ ६५ ॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ६६

अयुक्तस्य योगायुक्तस्य बुद्धिर्नास्ति नो भवति अयुक्तस्य भावना दृढबुद्धिरूपा निष्ठा च न भवति अभावयतो भावना विहीनस्यच शान्ति र्नास्ति अशान्तस्य च सुखं कुतः (सम्भवति) ६६

चित्त को रागद्वेष से हटा कर परमात्मा में नहीं लगाने वाले अयुक्त मनुष्य की न तो बुद्धि स्थिर होती है, और न उसे भावना होती है, जिसे भावना नहीं उसे शान्ति भी नहीं और जिसे शान्ति नहीं उसे सुख कहां ? ॥ ६६ ॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७

हि यतो यन्मनश्चरतां विषयेषु प्रसरतामिन्द्रियाणामनु पश्चाद्द विधीयते तदनुगामि भवति तन्मनोऽस्य पुरुषस्य प्रज्ञां बुद्धिमम्भसि जले वायु वेगवान् पवनो नावमिव नौकामिव इरत इतश्चेतश्च परिभ्रामयति ॥६७॥

जैसे वायु जल में खड़ी हुई नौका को खींच ले जाता है वैसे ही विषयाधीन इन्द्रियों में से जिस के वश मे मन हो जाता है वही इन्द्रिय अयुक्त पुरुष की वुद्धि को हर लेती है ॥ ६७ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥

हे महाबाहोऽर्जुन ! तस्माद्धेतो यस्य पुरुषस्येन्द्रियाणि सर्वशः सर्वप्रकारेणेन्द्रियार्थेभ्यो विषयेभ्यो निगृहीतानि निरुद्धानि ( सन्ति ) तस्य प्रज्ञा बुद्धिः प्रतिष्ठिता प्रकंपेण स्थिता स्थिरा ( वोद्धव्या ) ॥६८॥

इसलिये हे महाबाहो ! जिसने मन को विरक्त कर परमात्मा में जोड़ने के साथ इन्द्रियों को भी सब विषयों से रोक लिया है उसी को बुद्धि स्थिर होती है ॥ ६८ ॥

या निशा सर्वभूतानां तस्यां जागर्ती संयमी ।

यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः

सर्वेषां भूतानां प्राणिनां या निशा रात्रिः, संयमी कृतसंयमः पुरुषस्तस्यां जागर्ति प्रबुध्यते यस्याञ्च भूतानि सामान्यप्राणिनो जाग्रति प्रबुध्यन्ते पश्यतो ज्ञानिनो मुनेः मननशीलस्य सा निशा ( भवति ) ॥६९॥

ऐसी जो स्थिर बुद्धिवाली स्थिति सब प्राणियों को रात्रि समान अगम्य है, उस स्थिति में संयमी पुरुष जागते हैं, और जो रागद्वेषयुक्त दशा में सब प्राणी जाग रहे हैं, उस दशा को विवेकी मुनि रात्रि जानते हैं ॥ ६९ ॥

आपूर्यमाण मचलप्रतिष्ठं ।
समुद्रमापः प्रविशन्ति यद्वत् ॥
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामाकामी ॥७०

आपो जलानि आसमन्तात्पूर्यमाणं पूर्णं तथा अचला प्रतिष्ठा मर्यादा यस्य स तं समुद्रं यद्वद् यथा प्रविशन्ति गच्छन्ति तद्वत् तथैव कामाः कामयन्त इति कामा इन्द्रियार्था यं पुरुषं

विशन्ति स्वतो गच्छन्ति स शान्ति माप्नोति माप्नोति काम कामी कामाभिलाषी ( तु ) न प्राप्नोति ॥७०॥

जैसे महान् और अचल समुद्र में सब प्रदेश के जल सहज ही समा जाते हैं, वैसे ही जिस की सब कामनायें चित्त में विकार किए बिना समा जाती हैं, वही पुरुष शान्ति को पाता है, भोगोंकी कामना वाला नहीं ॥ ७० ॥

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः।
निर्ममो निरहङ्कारः सशान्तिमधिगच्छति ॥७१

यः पुमान् पुरुषः कामान् विषयान् विहाय परित्यज्य निर्गता निःशेषेण गता नष्टा स्पृहा विषयेषु प्रबलेच्छा यस्य स तथाभूतः सन् चरति विचरति तथा निर्ममो ममत्वरहितो निरहं कारश्च भवति, स पुरुषः शान्ति शान्तिसुखमधिगच्छति प्राप्नोति ॥७१॥

जो पुरुष सब कामनाओं का त्याग करके स्पृहा, ममता और देहाभिमानसे रहित हो कर विचरता है, वही पुरुष उस परम शान्ति को पाता है ॥७१॥

एषा ब्राह्मी स्थितिःपार्थ नैनां प्राप्य विमुह्यति ।

स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥

हे पार्थ एषा समुपदिष्टरूपास्थिति स्वस्थिति ब्राह्मी ब्रह्मनिष्ठा। एनां ब्राह्मींस्थितिं प्राप्य प्राप्तो भूत्वा न विमुह्यति विमोहं गच्छति (तथा) अन्तकालेऽन्तसमयेऽप्यस्यां ब्रह्मचांस्थितौ स्थित्वा मनः प्रणिधाय ब्रह्मणो निर्वाणं पदं मोक्षमृच्छति गच्छति ॥७२॥

जिस का नाम है पार्थ, ब्राह्मी स्थिति है। और जिस स्थिति को पाने वाला फिर कभी भी विषयों में मोहित नहीं होता, तथा देहान्त के समय भी इसी स्थिति में स्थित होकर वह ब्रह्मनिर्वाण को पाता है ॥ ७२ ॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
सांख्ययोगो नाम द्वितीयोऽध्यायः ॥२

# अथ तृतीयोऽध्यायः

अर्जुन उवाच ।

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥१॥

हे केशव चेद्र यदि ते तव कर्मणः साङ्गयज्ञादिकर्मणो बुद्धिः समत्वरूपा ज्यायसी प्रशस्यतरा मताऽभीष्टा, तत् तर्हि घोरे भयानके कर्मणि वर्णोचितयुद्धादौ किं किमर्थं मां नियोजयसि प्रेरयसि ॥ १ ॥

हे जनार्दन ! यदि आप कर्मकी अपेक्षा ज्ञान बुद्धि को श्रेष्ठ मानते हैं तो हे केशव, मुझको इस घोर कर्म में क्यों लगाते हैं ॥ १ ॥

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥

व्यामिश्रेण सन्दिग्धेनेव वाक्येन मे मम बुद्धिं मोहयसि

मूढां करोपीव । तत् यस्मादेकं कर्मबुद्ध्योर्मध्येन्यतरत् निश्चित्य निर्णीय वद मामुपदिश, येनाऽहं श्रेयः कल्याणं मोक्षमाप्नुयां लभेयम् ॥२॥

आप इस द्विअर्थी जैसे वाक्यों से मेरी बुद्धि को मानो मोह रहे हैं इसलिये जिससे मैं कल्याणको पाऊं ऐसी एक बात निश्चय करके मुझे कहिये ॥ २ ॥

श्री भगवानुवाच ॥

लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३

न विद्यतेऽघं पापं यस्मिन् सोऽनघस्तत्सम्बुद्धौ हे अनघ ! अर्जुन ! पुरा प्रथमाध्याये मया सांख्यानां संन्यासिनां ज्ञानयोगेन योगिनां कर्मयोगिनां कर्मयोगेन ( इत्येवं प्रकारेण ) अस्मिन् लोके द्विविधा द्विप्रकारा निष्ठा तात्त्विकी स्थितिः प्रोक्ता कथिता ॥३॥

हे निष्पाप ! इस लोकमें दो प्रकारकी निष्ठा मैंने पहले कही है । ज्ञानियों की ज्ञानयोग से और योगियों की कर्मयोग से ॥ ३ ॥

न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥४॥

पुरुषो जनः कर्मणां वैदिककर्मणा मनारम्भादप्रवर्तनात् नैष्कर्म्य निष्कर्मभावनाऽश्नुते न प्राप्नोति, न च नाऽपि संन्यसनात् त्यागादेव सिद्धिं परमार्थप्राप्ति समधिगच्छति सम्यक् प्राप्नोति ॥४॥

परंतु कर्मोका आरम्भ ही न करने से पुरुष निष्कर्मभाव को नहीं पाता और कर्मोंके त्याग से भी सिद्धि को नहीं प्राप्त होता ॥४

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्व. प्रकृतिजैर्गुणैः ॥५॥

कश्चित् कोऽपि पुरुषो जातु कदाचिद्द क्षणमपि अकर्मकृत् निश्चेष्टो न तिष्ठति न स्थातुं शक्नोति हि यतः प्रकृतिजैः सत्व रजस्तमोरूपैः ( स्वाभाविकैर्वा ) गुणैरवशोऽधीनः सर्वो जनः कार्य्यते ॥५॥

कोई भी प्राणी क्षणमात्रभी कर्म किये विना नहीं रह सक्ता क्योंकी प्रकृतिजन्य गुण विवश कर सबसे कर्म कराते हैं ॥ ५ ॥

**कर्मेंद्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इंद्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥६**

यः पुरुषः कर्मेन्द्रियाणि श्रवणादीनि संयम्य विषयेभ्यो निरुध्येन्द्रियाणामर्थान् शब्दादिविषयान् मनसा चेतसा स्मरन् ध्यायन्नास्ते तिष्ठति, विमूढोविशेषेण मूढ़आत्मा मनो यस्य स मिथ्याचारो दाम्भिक उच्यते कथ्यते ॥६॥

जो मूढ़ मनुष्य कर्मेन्द्रियों को रोक कर मन से विषयों का चिंतन करता रहता है वह मिथ्याचारी कहा जाता है ॥ ६ ॥

**यस्त्विंद्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेंद्रियैः कर्मयोगमसक्तः स विशिष्यते ॥७॥**

हे अर्जुन ! तु किन्तु यः पुरुषो मनसा चेतसेन्द्रियाणि नियम्य संयम्य कर्मेन्द्रियैः कर्मयोगमसक्तः सन्नारभते करोति स विशिष्यते विशिष्टः (श्रेष्ठः ) अस्ति ॥७॥

हे अर्जुन ! ज्ञानेंद्रियों को विवेक ज्ञान से वश कर कर्मेंद्रियों से कर्म आचरता है ऐसा आनासक्त पुरुष ही श्रेष्ठ है ॥ ७ ॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः**
**शरीरयात्रापि च ते न प्रसिद्धयेदकर्मणः॥८॥**

त्वं नियतं नित्यं कर्म स्ववर्णोचितं कुरु विधेहि हि यतोऽकर्मणः कर्माकरणात्कर्म कर्मकरणं ज्यायः प्रशस्यतरम् । अकर्मणः कर्मरहितस्य ते तव शरीरस्य यात्रा निर्वाहोऽपि न प्रसिध्येत् निर्वर्तेत ॥८॥

इसलिये तू भी अपना धर्म नियत कर्म कर कर्म न करने से कर्म करनाही श्रेष्ठ है, कम न करने से तो तेरी शरीरयात्रा भी सिद्ध नहीं होगी॥ ८॥

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबंधनः।**
**तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर ॥९॥**

यज्ञार्थान् वैदिकयागार्थात् अन्यत्रातिरिक्तदशायामयं लोकः संसारः कर्मबन्धनः कर्म एव बन्धनमावश्यकं यस्य स तथा भूतो वर्तते हे कौन्तेय! मुक्तसङ्गः फलासक्तिरहितस्तदर्थं तत्कृते कर्म समाचार कुरु ॥९॥

यज्ञ निमित्त (प्रभु-प्रीत्यर्थ, कर्मों के सिवाय अन्य (फलेच्छा से हो

यज्ञशिष्टं यज्ञात्रशिष्टमश्नन्ति ते यज्ञशिष्टाशिनः सन्तो महापुरुषा सर्वैः किल्बिषैः पापै मुच्यन्ते मुक्ता भवन्ति, ये तु पुरुषा आत्मकारणात् केवलं स्वकीयमुदरमात्रं भर्तुं पचन्ति, ते पापाः पातकिनोऽघं पापं भुञ्जतेऽश्नन्ति ॥१३॥

यज्ञसे बचे हुए पदार्थों के ग्रहण करने वाले सज्जन सब पापों से मुक्त होते हैं, और जो मनुष्य यज्ञ न कर केवल अपनेही लिये पकाते हैं सो तो पापको ही पाते हैं ॥ १३ ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४॥**

भूतानि प्राणिनोऽन्नाद्भ भवन्ति जीवन्ति अन्नस्य सम्भव उत्पत्तिः पर्जन्यात् मेघात् भवति पर्जन्यो मेघो यज्ञाद्द भवति यज्ञः ( च ) कर्मणः समुद्भव उत्पत्तिर्यस्य स कर्मप्रभवोऽस्ति ॥१४

प्राणी मात्र अन्नसे होते हैं, अन्न वर्षासे होता है, वर्षा यज्ञसे होती है, यज्ञका उद्भव कर्मसे होता है, ॥१४॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५**

कर्म ब्रह्मणः प्रकृतेरुद्भव उत्पत्ति र्यस्य तत्तथाभूतं विद्धि जानीहि, ब्रह्म (च) प्रकृतिश्चाक्षर समुद्भवं परमेश्वरोद्भूतं विद्धि तस्माद्धेतोः सर्वगतं सर्वव्यापि ब्रह्म यज्ञे नित्यं सदा प्रतिष्ठिं प्रकर्षेण स्थितं (ज्ञेयम्) ॥१५॥

कर्मकी उत्पत्ति प्रकृति से और प्रकृति की उत्पत्ति सर्वव्यापी अक्षरब्रह्म से है, इस लिये यज्ञ के मूल मेंभी वह सर्वव्यापी परमात्मा ही सर्वदा रहे हुए हैं ऐसा समझ ॥१५॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥

हे पार्थ ! एवमुक्तप्रकारेण प्रवर्तितं विहितं चक्रं यज्ञरूपं यः पुरुषो नानुवर्तयति इहाऽस्मिन् संसारे नाऽनुवर्तयति न परि चालयति आयुः पापजीवन इन्द्रियाराम इन्द्रियलम्पटः स मोघं वृथा जीवति श्वसिति ॥१६॥

ऐसे परमात्मप्रेरित चक्रके अनुसार जो मनुष्य इस लोकमें यज्ञ नहीं करता, वह इन्द्रियपरायण औरपापी जीवन वाला मनुष्य हे पार्थ, व्यर्थ ही जीता है ॥१६॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।

आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥१७

यस्तु मानवः पुरुष आत्मनि स्वात्मन्येव रतिः स्नेहो यस्य स तथाऽऽत्मन्येव तृप्त आत्मन्येव च सन्तुष्टः स्यात् तस्य कार्य्यं यज्ञादि न वर्तते नावश्यकम् ॥१७॥

जो पुरुष आत्मामें ही प्रीतिवाला, आत्मा में ही तृप्ति वाला और आत्मामें ही संतुष्ट है, उसको अपने लिये कुछभी कर्त्तव्य नहीं रहता ॥१७॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

तस्यात्मसन्तुष्टस्य कृतेन विहितेनाऽकृतेनाऽविहितेन (वा) इहाऽस्मिन् संसारे कश्चन कोऽप्यर्थः प्रयोजनं न नाऽस्ति अस्य च सर्वेषु भूतेषु प्राणिषु कश्चित् कोऽप्यर्थस्य प्रयोजनस्य व्यपाश्रयः सम्बन्धो नाऽस्ति ॥१८॥

क्योंकि, ऐसे पुरुषको फिर इस लोकमें कर्म करनेसे अथवा न करनेसे न तो कुछ प्रयोजन है और न सर्व भूतोंसे उसका निजका कुछ स्वार्थ वा आश्रय ही है ॥१८॥

तस्मादसक्तः सततं कार्यं कर्म समाचार ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥१९॥

तस्मद्धेतोरसक्त आसक्तिरहितः सततं सदा कार्य मवश्य करणीयं ( वर्णोचितं ) कर्म धर्मयुद्धादि समाचर सम्यगाचर कुरु। हि यतः पूरुषः पुरुषोऽसक्त आसक्तिरहितः सन् कर्म स्वव र्णोचितमावश्यक माचरन् कुर्वन् परं ब्रह्माऽप्नोति प्राप्नोति ॥१६

यह आत्मस्थिति प्राप्त करनेके लिये तू भी फलासक्ति छोड सदा अपना कर्तव्य कर्म किया कर, अनासक्त होकर कर्म करने वाला मनुष्य अवश्य उस परम दशाको पाता है ॥१६॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥२०॥

हि यतो जनकादयः जनकप्रभृतयः कर्मणैव सम्यक् सिद्धिं मोक्षरूपामास्थिताः प्राप्ताः। त्वं लोकस्य संसारस्य संग्रहः स्वस्व कर्मणि नियोजनं तमपि सम्यक् पश्यन् ( कर्म ) कर्तुमर्हसि योग्योऽसि ॥२०॥

जनकादि महापुरुषभी इस प्रकार कर्म करने से ही उस आत्म

सिद्धिको प्राप्त हुए हैं. लोक हितकी दृष्टिसे भी तुझे कर्महीं करना उचित है ॥२०॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥

श्रेष्ठः पुरुषो यद्यत् ( कर्म ) आचरति करोति तत्तदेवेतरो निम्नकोटिस्थोजन आचरति स लोकसंग्राहको ज्ञानी यत् किञ्चित् प्रमाणं प्रमाकरणं [ स्वीकारं वा ) कुरुते तदेव लोको जनोऽनुवर्ततेऽनुकरोति ॥२१॥

क्योंकि श्रेष्ठ पुरुष जो जो करता है उसीको इतर लोग भी करने लगते हैं, और जिसको वह प्रमाण करता है उसीके अनुसार लोगभी चलते हैं ॥२१॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥

हे पार्थ ! त्रिषु लोकेषु मे मम किञ्चन किमपि कर्तव्यं करणीयं नाऽस्ति न च ( किमपि ) अनवाप्तमप्राप्तमवाप्तव्यं प्राप्तव्यं वा वर्तते ( तथापि ) कर्मणि वेदोक्तकर्मणि खलु वर्त

एव स्थित एवाऽस्मि ॥२२॥

हे पार्थ, इन तीनों लोकोंमें मुझे न तो कुछ कर्तव्य है और न कोई अप्राप्त वस्तु प्राप्त करनेकी है, तथापि मैं कर्म करताही हूं ॥२२॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३॥

हे पार्थ ! हि यतोऽहमतन्द्रितस्तन्द्राऽऽलस्यं तद्रहितः सन् जातु कदाचित् कर्मणि कर्ममार्गे न वर्तेयं न स्थितिं कुर्याम् (तर्हि) मनुष्या जनास्तु सर्वशः सर्वांशेन मम वर्त्म मार्गमनु वर्तन्तेऽनुकरिष्यन्त्येवेत्यर्थः ॥२३॥

क्योंकि यदि मैं सावधान रहकर कर्म में न बरतू तो हे पार्थ; सब मनुष्य मेरे ही जैसा बर्ताव करने लगेंगे ॥ २३ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।२४।

चेद्र यद्यहं कर्म न कुर्यां [ तदा ] इमे दृश्यमानाः लोका उत्सीदेयु र्नश्येयुः ( तदा ) अहं संकरस्य वर्णसाङ्कर्यस्य कर्ता कारकः स्यां भवेयम् । इमाः प्रजाः ( च ) उपहन्यां

नाशयेयम् ॥२४॥

मेरे कर्म के न करने से यह सब लोक नष्ट हो जावें और मैं ही वर्णसंकरता का कर्ता तथा प्रजाजनों का घातक होऊं ॥ २४ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोक संग्रहम् ॥२५॥

अविद्वांसोऽज्ञानिनो यथा येन प्रकारेण कर्मणिसक्ता आसक्तिमन्तः कर्म कुर्वन्ति, तथा विद्वान् ज्ञानी लोकसंग्रहं चिकीर्षुः कर्तुमिच्छुः ( तत्र ) असक्त आसक्ति रहितः सन् कर्म कुर्य्यात् ॥२५॥

इस लिये हे भारत ? जैसे फलासक्त अज्ञानी लोग कर्म करते हैं वैसे ही लोगों के हित चाहने वाले अनासक्त ज्ञानी को भी कर्म करने चाहियें ॥२५॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥२६

युक्तो योगयुक्तो विद्वान् ज्ञानी सर्वाणि कर्माणि सम्यगाचरन् कुर्वन् कर्मसङ्गिनां कर्मसंलग्नानामज्ञानिनां बुद्धेर्भेदं

व्यवच्छेदं न कुर्यान्नो विदधीत ( किन्तु तान् कर्मण्येव ) जोषयेत् प्रीणयेत् प्रीतिं तत्रोत्पादयेत् ॥२६॥

फलेच्छा से कर्म में लगे हुए अज्ञानियों की बुद्धि में ज्ञानी पुरुष भेद न उत्पन्न करे, किन्तु आप योगयुक्त होने पर भी शुभ कर्म करता हुआ उन सब को कर्म में प्रेरे ॥ २६ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमितिमन्यते ॥२७॥

अहंकारेण विमूढ आत्मा मनो यस्य स पुरुषः सर्वप्रकारेण प्रकृतेर्गुणैः क्रियमाणानिकर्माणि ( सन्ति. तेषां कर्ताऽहमिति मन्यते ॥२७॥

वास्तव में सब कर्म प्रकृति के तीन गुणों करके किये जाते हैं, अहंकार से विमूढ़ प्राणी वृथा ही अपने को उस का कर्ता मानता है ॥ २७ ॥

तत्त्ववित्तु महावाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न संज्जते ॥२८॥

हे महावाहो ! गुणश्च कर्मविभागश्च तौ तयोर्गुणकर्म

विभागयोः स्ववित् यथार्थवित् पुरुषः गुणा प्रकृति गुणा गुणेषु प्रकृतिजेष्वेव वर्तन्ते" इति मत्वा निश्चित्य न सज्जते न सक्तो भवति ॥ २८ ॥

हे महाबाहो, गुण और कर्म से आत्मा को भिन्न जानने वाला 'गुण ही गुणों में वर्तते हैं' ऐसा समझ कर उस में आसक्त नहीं होता है और अपने को कर्ता नहीं मानता ॥ २८ ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥

प्रकृतेः स्वभावस्य गुणैः धर्मैः संमूढाः मोहंगताः गुणानां सुखदुःखादीनां कर्मसु व्यापारेषु सज्जन्ते आसक्ताः भवन्ति तान् पूर्वोक्तान् न कृत्स्नंविदन्ति इति अकृत्स्नविदः अल्पज्ञातृन् मन्दान् मूढान् कृत्स्नविद्ध ज्ञानी न विचालयेत् न अधः पातयेत् ॥२६॥

प्रकृति के गुणों में अहंभाव रखने वाले मूढ मनुष्य ही गुणों के कर्मों में आसक्त रहते हैं, परन्तु ऐसा होने पर भी उन अल्पज्ञ और मन्द मनुष्यों को पूर्ण ज्ञानी कर्मों से चलित न करे ॥ २६ ॥

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा

## निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः।३०।

हे अर्जुन मयि वासुदेवे परमेश्वरे सर्वाणि सम्पूर्णानि कर्माणि कर्तव्यानि संन्यस्य समर्प्य अध्यात्मचेतसा विचार बुद्ध्या निराशीः आशारहितः निर्ममः ममतारहिता विगतः यातः ज्वरः संतापो यस्य सः विगतसंतापो भूत्वा संभूय युद्ध्यस्व युद्धंकुरु ॥३०॥

इस लिए तू सब कर्मों को विवेक बुद्धि से मुझ (परमात्मा) में संन्यास ( त्याग समपर्ण ) करके तथा फलेच्छा, कर्तापन और शोक को छोड़ कर युद्ध कर ॥ ३० ॥

## ये मे मतमिदं नित्यमनुतिष्ठंति मानवाः।
## श्रद्धावंतोऽनसूयंतो मुच्यंते तेऽपि कर्मभिः ॥३१॥

ये श्रद्धावन्तः मयि वासुदेवे विश्वासवन्तः अनसूयन्तः मद्वाक्येऽद्वेषवन्तः मानवाः जनाः इदं मे मदीयं मतं नित्यं प्रतिदिन मनुतिष्ठन्ति कुर्वन्ति ते जनाः कर्मभिः कर्मबन्धनैः मुच्यन्ते मोक्षंलभन्ते ॥३१॥

जो मनुष्य दोषदृष्टि को छोड़, श्रद्धावान् हो कर मेरे इस

मत का सदा अनुसरण करते हैं, वह भी कर्म बन्धन से मुक्त होते हैं ॥ ३१॥

## ये त्वेतदभ्यसूयंतो नानुतिष्ठंति मे मतम् ।
## सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥३२॥

ये तु अभ्यसूयन्तः अनिन्दकाः मे मम मतं नानुतिष्ठन्ति मदीयं मतं नकुर्वन्ति तान् एतादृशान् सर्वज्ञाने सर्वेषु ज्ञानेषु विमूढान् अतिमुर्खान् नष्टान् नाशंगतान् अचेतसः विचारशून्यान् विद्धि जानीहि ॥३२॥

जो मनुष्य दोषदृष्टि करके मेरे इस मतानुसार नहीं चलते, उन को तू सर्व ज्ञान में अति मूढ, अविवेकी और नष्ट होने वाला जान ॥ ३२ ॥

## सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
## प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति ।३३

ज्ञानं विद्यते अस्येति ज्ञानवानपि बुद्धिवानपि नरः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशं अनुरूपं चेष्टते करोति भूतानि सर्वे प्राणिनः प्रकृतिं स्व स्वभावं यान्ति स्व स्वभावा-नुकूलं चलन्ति निग्रहः मनइन्द्रियादिवशीभूत कारिणीशक्तिः

किं करिष्यति न किमपि कर्तुं समर्था ॥३३॥

ज्ञानवान् भी अपनी प्रकृतिस्वभावानुसार वर्तता है, भूत मात्र अपनी अपनी प्रकृति के आधीन हो रहे हैं, वहां अमुक निग्रह क्या करेगा ॥ ३३ ॥

इन्द्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ॥३४॥

इन्द्रियस्येन्द्रियस्य प्रतीन्द्रियं तस्यार्थे विषये रूपादौ राग द्वेषौ अनुकूले रागः प्रतिकूले द्वेषः व्यवस्थितौ विशेषेण वर्तमानौ तयोः रागद्वेषयोः वशं अधीनं न गच्छेत् न प्राप्नुयात् हि यतः एतौ रागद्वेषौ अस्य प्राणिनः परिपन्थिनौ विरोधिनौ ॥३४॥

परन्तु इन्द्रियों को अपने अपने विषय में जो स्वभाविक रागद्वेष रहता है, उनके भी वश नहीं होना चाहिये, क्योंकि वह इस पुरुष के उन्नति मार्ग में डाकू है ॥ ३४ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥

स्वेन आत्मना अनुष्ठितात् संपादितात् परस्य अन्यस्य ब्राह्म

णादेः धर्मात् विगुणः न्यूनगुणयुक्तोपि स्वधर्मः स्वकीयधर्मः युद्धे मरणादिकधर्मः श्रेयान् अति कल्याणकारी स्वधर्मे स्वकीय धर्मे निधनं मरणमपि श्रेयः कल्याणकारी यतः परस्य अन्यस्य धर्मः भयावहः भयं वहतीति भयावहः भयकारकः ॥३५॥

अपना वर्णोचित धर्म विगुण होने पर भी अपने लिए परधर्माचरण की अपेक्षा श्रेयकारक है। स्वधर्माचरण में मरना भी श्रेयकारक है, किन्तु पराया धर्म तो भय कारक ही है॥ ३५॥

अर्जुन उवाच ॥

**अथ केन प्रयुक्तोऽयंपापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६**

हे वार्ष्णेय हे कृष्ण अथ इदानीं अनिच्छन्नपि इच्छा रहितोपि बलादिवनियोजितः हठादिव नियोजितः प्रेरितः अयं पुरुषः मनुष्यः केन प्रकारेण प्रयुक्तः प्रेरितः पापं चरति पापा चरणं करोति॥३६

हे वार्ष्णेय, ऐसा है तो फिर यह पुरुष किस का प्रेरा हुआ परवशकी न्याई इच्छा विरुद्ध पापाचरण करता है॥ ३६॥

श्री भगवानुवाच ॥

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७**

रजसः गुणात् समुद्भव उत्पत्ति यस्यैवंभूतः एषोऽनर्थकारी कामः वासना अवस्थान्तरापन्नः क्रोधोऽपि एष एव महदशनं भोजनं यस्य सः महाशनः सर्वभोजी महापाप्मा अतीव पापिष्ठः अतः इह लोके वैरिणं शत्रुभूतमेनं पापं विद्धि जानीहि ॥३७॥

रजोगुण से पैदा होने वाला, सदा अतृप्त और महापापी, ऐसे इस काम और इस क्रोध को ही तू इस विषय में शत्रु जान ॥३७

**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥**

धूमेन वान्हिः अग्निः आव्रियते आच्छाद्यते यथा मलेन आदर्शः अयनाख्यं आच्छाद्यते यथा उल्वेन जरायुणा गर्भः आच्छाद्यते तथा तेन प्रकारेण तेनदुष्टेन कामेन इदं विशुद्धज्ञानं आवृत्तं आच्छादितम् ॥३८॥

जैसे धूम से अग्नि, मैल से दर्पण और झिल्ली से गर्भ ढका

हुआ होता है, वैसे ही इस काम से यह ज्ञान ढका हुआ है ॥ ३८॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौंतेय दुष्पूरेणानलेन च ॥३९॥

हे कुन्तीपुत्र ! नित्यवैरिणा विकटशत्रुणां दुष्पूरेण कष्टेनापितृप्तुमशक्येन अनलेन नास्य अलं पर्याप्ति वियते यस्य तेन अग्निरूपेण एतेन पूर्वोक्तेन कामरूपेण काम इच्छैव रूपं यस्य तेन ज्ञानिनः ज्ञानवतः जनस्य ज्ञानं आवृतं आच्छादितम् ॥३९॥

हे कौंतेय ! ज्ञानी का सदा का वैरी और कभी तृप्त नहीं होने वाले इस काम रूपी अग्नि ने ही मनुष्य का ज्ञान ढक रखा है ॥३९

इंद्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

इन्द्रियाणि श्रोत्रादीनि मनोऽन्तःकरणं बुद्धिर्ज्ञानमस्य कामस्य अधिष्ठानं स्थानं उच्यते कथ्यते एतैः करणभूतैः ज्ञानं ज्ञानिनो विशुद्धज्ञानं आवृत्य आच्छाद्य एषः देहिनं जनं विमोहयति विशेषेण मोहंप्रापयति ॥४०॥

इन्द्रिय, मन और बुद्धि, ये इस के निवास स्थान कहे जाते हैं, इस के द्वारा ही यह ज्ञान का ढक कर जीव को मोह में फंसाता है॥ ४०॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१

हे भरतर्षभ ! हे भरतकुलश्रेष्ठ तस्मात् कारणात् आदौ पूर्वं त्वं इन्द्रियाणि श्रोत्रादीनि नियम्य वशीकृत्य ज्ञानस्य शास्त्रीयभक्तिरूपस्य विज्ञानस्य स्वरूपाऽनुभवस्य नाशनं नाशकर्तारं एनं पूर्वोक्तं पाप्मानं पापिष्ठं प्रजहि त्यज ॥४१॥

इस लिये हे भरतश्रेष्ठ ! तू प्रथम इन्द्रियों को वश करके इस ज्ञान विज्ञान के नाश करने वाले पापी काम को मार डाल ॥ ४१

इंद्रियाणिपराण्याहुरिंद्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥

स्थूलदेहात् इन्द्रियाणि श्रोत्रादीनि पराणि सूक्ष्माणि आहुः कथयन्ति इन्द्रियेभ्यः श्रोत्रादिभ्यः परं सूक्ष्मं मनः अन्तःकरणं आहुः कथयन्ति मनसस्तु परा सूक्ष्मा बुद्धिर्ज्ञानं भवति यो बुद्धेः परतस्तु सूक्ष्मस्तु स ब्रह्मस्वरूप आत्मा ॥४२॥

यद्यपि इन्द्रियों को अति प्रबल कहा है, परन्तु इन्द्रियों से भी मन, मन से बुद्धि और बुद्धि से भी आत्मा बड़ा प्रबल है ॥ ४२

एवंबुद्धेः परं बुद्ध्वा संस्तभ्यात्मात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥

हे महाबाहो हे दृढभुज एवं मदुक्तप्रकारेण बुद्धेःपर मुत्कृष्टं आत्मानं बुद्ध्वा ज्ञात्वा आत्मना स्वेनैवात्मानासंस्कृतेन मनसा संस्तभ्य सम्यक्स्तम्भनं कृत्वा दुरासदं दुःखेनापि नाश यितुमशक्यं कामः रूपोयस्य तं कामरूपं मभिलापारूपं शत्रुं वैरिणं जहि नाशय ॥४३॥

इस प्रकार आत्मा को बुद्धि से प्रबल जान (इन्द्रियों को रोकने के उपरान्त) विवेक बुद्धि से मन को भी उस आत्मा में स्थिर करके इस काम रूपी दुर्जय शत्रु को मार ॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
सांख्ययोगो नाम तृतीयोऽध्यायः ॥३

——:o:——

# चतुर्थोऽध्यायः ।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १

अहं श्री कृष्णः अव्ययं नित्य सफलकं इमं अध्याय द्वये नोक्तं योगं विवस्वते आदित्याय सृष्टेरादौ प्रोक्तवान् कथितवान् सच विस्वधान् आदित्यः स्वपुत्राय मनवे प्राह उक्तवान् मनुः आदित्यपुत्रः स्वपुत्राय इक्ष्वाकवे अब्रवीत् अवोचत् ॥ १ ॥

यह सनातन योगमार्ग मैंने पहले सूर्य ( सूर्यवंशके मूल पुरुष ) से कहाथा, सूर्यने मनुसे कहाथा और मनुने इक्ष्वाकुसे कहाथा ॥१॥

एवं परंपराप्राप्तमिमं राजर्षयोविदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥२॥

परान् आत्मज्ञानरहितान् तापयतीति परं तपः तत्संबुद्धौ, हे परंतप एवं अनेन प्रकारेण परंपरया क्रमेण प्राप्तं अवाप्तं इमं पूर्वोक्त कथितं योगं राजानश्च ते ऋषयश्च राजर्षयः जनकादयः विदुः ज्ञातवन्तः स योगः इह संसारे महता दीर्घेण कालेन समयेन नष्टः नष्टप्रायोजातः ॥२॥

इस प्रकार परंपरा से पाये हुए इस योग को राजर्षियों ने जाना, परंतु हे परंतप, बहुत काल में फिर वह इस लोक से नष्ट हो गया ॥२॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥

त्वं मे मम कृष्णस्य भक्तः सेवकः अतएव सखा च मित्रश्च इति हेतोः सएवायं मोक्षसाधकः पुरातनः योगः योगविद्या ते तुभ्यं अर्जुनाय अद्य इदानीं प्रोक्तः कथितः कुतः हि यस्मात् एतदुत्तमं सर्वोत्कृष्टं रहस्यं गोप्यं योगः ज्ञानमित्यर्थः ॥३॥

तू मेरा भक्त और सखा है इस लिये वही पुरातन और उत्तम रहस्यरूप योग मैंने आज तुझे कहा ॥३॥

अर्जुन उवाच।

## अपरं भवतो जन्म परं जन्म विवस्वतः।
## कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४

भवतः तव श्री कृष्णस्य जन्म उत्पत्तिः अपरं अर्वाक् इदानीमेव वसुदेव गृहे जातः विवस्वतः आदित्यस्य जन्म उत्पत्तिः परं पूर्वं सः सृष्टे रादौ जातः इति हेतोः त्वं श्रीकृष्ण एव आदौ सृष्टेरादौ योगं प्रोक्तवान् कथितवान् अहं एतद्द विरुद्धार्थवार्ता कथं केनप्रकारेण विजानीयाम् विबुध्येय ॥४॥

आप का जन्म अभी का है और सूर्य का जन्म बहुत पहिले हुआ था, तो मैं यह कैसे जानू कि आपने उस को प्रथम योग कहा ॥४॥

श्री भगवानुवाच ॥

## बहुनि मे व्यतीतानि जन्मानि तव चार्जुन।
## तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥५॥

हे अर्जुन मे मम श्रीकृष्णस्य तव अर्जुनस्य च बहुनि असंख्यानि जन्मानि उत्पत्ति मरणादीनि व्यतितानि अतिक्रान्तानि

हे परन्तप तानि सर्वाणि संपूर्णानि अहं श्रीकृष्णः वेद जानामि त्वं अर्जुनः न वेत्थ न जानीषे ॥५॥

हे परंतप, मेरे और तेरे बहुत से जन्म बीत चुके हैं मैं उन सब को जानता हूं, तू नहीं जानता ॥५॥

**अजोऽपिसन्नव्ययात्माभूतानामीश्वरोऽपिसन् ।**
**प्रकृतिस्वामधिष्ठाय संभवाम्यात्ममायया ॥६**

अजोऽपिसन् जन्मरहितोपिसन् तथा अव्ययात्मा अक्षीण ज्ञानशक्ति स्वभावोपिसन् स्वां स्वकीयां प्रकृतिं अधिष्ठाय वशी कृत्य आत्मनः स्वस्य मायया संभवामि देहवान्निव भवामि जन्म धारयामि ॥६॥

मैं जन्म मरण से रहित और भूत मात्र का ईश्वर होने पर भी अपनी प्रकृति का आश्रय ले कर अपनी माया से जन्म लेता हूं॥६

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥७**

हे भारत ! हे भरतकुलप्रसूत यदा यदा यस्मिन् २ युगे काले वा हि निश्चयेन धरन्तिजनाः यस्याऽसौ धर्मस्तस्य धर्मस्य

ग्लानिः हानिर्भवति जायते अधर्मस्य पापस्य उभ्युत्थानं उद्भवो भवति तदा तस्मिन् समये अहं ईश्वर आत्मानं सृजामि देहं धारयामि ॥७॥

जब जब धर्म की ग्लानि और अधर्म की वृद्धि होती है, तब तब हे भारत, मैं शरीर को धारण करता हूं ॥७॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥८॥

किमर्थमित्याह—साधूनां सज्जनानां परित्राणाय रक्षणाय दुष्कृतां पापविधातॄणां विनाशाय समूलं विनाशनायच धर्म संस्थापनाय धर्मस्य सम्यक् स्थापनं प्रवर्तनं तस्मै अर्थाय प्रयो जनाय युगे युगे प्रतियुगं संभवामि अवतरामि ॥८॥

सज्जनों के तारण और दुष्टों के संहार के लिये तथा धर्म की संस्थापना के लिये इस प्रकार मैं युग युग में प्रकट होता हूं ॥८

जन्मकर्म च मे दिव्यमेवं यो वेत्ति तत्वतः
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९

यः पुरुषः तत्त्वतः यथार्थतया मे मम ईश्वरस्य जन्मः प्रादुर्भावं

कर्म च साधुपरित्राणादि दिव्यं वैचित्र्यं एवं अनेन प्रकारेण वेत्ति जानाति । हे अर्जुन स पुरुषः देहं शरीरं त्यक्त्वा पुनः भूयः जन्म उत्पत्तिमरणादिकं न एति प्राप्नोति किन्तु मां ईश्वरं एव निश्चयेन एति प्राप्नोति ॥६॥

ऐसे मेरे दिव्य जन्म और कर्म को जो तत्व से जानता है, वह देह छूटने के पश्चात् हे अर्जुन, पुनर्जन्म को न पाकर मुझे ही पाता है ॥६॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥**

रागश्च विषये प्रीतिश्च भयं च भीतिश्च क्रोधश्च कोपश्च ते त्रयो वीताः विगता येभ्यस्ते वीतरागभयक्रोधाः मन्मया मद्भक्तिमया ईश्वरजीवयोरभेददर्शिनः माम् ईश्वर मेव उपाश्रिताः आश्रयकारिणः ज्ञानतपसा ईश्वरजीवयो रभेदज्ञानमेव तप स्तेन पुताः पवित्राः सन्तो वहवः अनेकेऋषयः मद्भावं ईश्वर भावं आगताः प्राप्ताः मयिएव लीनाः संजाताः ॥१०॥

राग, भय और क्रोध को लांघ सर्व भाव से मेरे परायण तथा मेरे ही आश्रित हो कर उक्त तत्वज्ञानरूपी तप से पवित्र बने हुए बहुत से तपस्वी मेरे परमात्म भाव को प्राप्त हुए हैं ॥१०॥

**ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम् ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११**

हे पार्थ हे पृथुपुत्र ये मनुष्याः यथा येन प्रकारेण येन प्रयोजनेन वा सर्वशरीरस्थं मामीश्वरं प्रपद्यन्ते प्राप्नुवन्ति भजन्ति तथैव सर्वशः सर्वप्रकारैः मम ईश्वरस्य वर्त्म मार्गं धर्ममार्गं अनुवर्तन्ते प्रचलन्ति अहमीश्वरः तान् जनान् तथैव तेनैव प्रकारेण मोक्षदानेन धनदानेन पीड़ा नाशकत्वेन भजामि अनुगृह्णामि दयां करोमि ॥११॥

जो मुझको जिस रूपमे भजता है उसको मैं उसी रूपसे फल देता हूं हे पार्थ, सारे मनुष्य मेरेही मार्गोंका अनुसरण करते हैं ॥११॥

**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ।**
**कांक्षंतः कर्मणां सिद्धिं यजंत इह देवताः ॥१२**

कर्मणां प्रयत्नानां सिद्धिं सफलतां कांक्षन्तः वाञ्छन्तः जना इह लोके देवताः देवान् यजन्ते वलिदानेन पूजयन्ति हि यस्मात् मानुषे लोके मृत्युलोके कर्मणा जायते इति कर्मजा सिद्धिः सफलता क्षिप्रं शीघ्रं भवति जायते ॥१२

कर्मफलकी इच्छावाले जो लोग देवताओं कोपूजते हैं, (वह भी अज्ञातभावसे मुझेही पूजते हैं इस कारण ) उनको भी इस मनुष्य लोकमें कर्म जन्य सिद्धि शीघ्र प्राप्त होती है. ॥१२॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३

मया ईश्वरेण गुणाः सत्वरजस्तमांसि कर्माणि यज्ञसन्ध्योपासनयुद्धकृषिसेवादीनि तेषां विभागशः विभागैः चत्वार एव वर्णाश्चातुर्वर्ण्यम् वर्णचतुष्टयं सृष्टमुत्पादितम् तस्य वर्णकर्मविभागस्य अव्ययं नाशरहितं कर्तारं मुत्पादकमपि अकर्तारं मनुत्पादकमेव मामीईश्वरं विद्धि जानीहि ॥१३॥

गुण और कर्म के भेदसे मैंने चारों वर्ण सरजे हैं, परंतु उसका कर्ता होनेपर भी मुझे तू वास्तवमें अविकारी और अकर्त्ताही जान. ॥१३॥

न मां कर्माणि लिंपंति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते ॥

मां जगन्नियन्तार मीश्वरं कर्माणि सृष्ट्यु्त्पादकानि कार्या

णि न लिप्यन्ति न स्पर्शयन्ति वशे न कुर्वन्ति मम परमात्मनः कर्मणां जगन्निर्माणादीनां यज्ञाग्निहोत्रादीनाञ्च फले स्पृहा इच्छा न भवति यो जनः मामीश्वरं एव मनेन प्रकारेण जानाति वुध्यते स जनः कर्मभिः कर्मफलभोगै र्न वध्यते वन्धनं नैति ॥१४

मुझे कर्मफलकी स्पृहा नहीं है इसी से कर्म मुझ ईश्वर को बंधन नहीं कर सकते, और जो मुझे ऐसा अकर्ता व निर्लेप जानता है वहभी निष्काम होकर कर्मसे नहीं बंधता ॥१४॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५

एवं पूर्वोक्तप्रकारेण ज्ञात्वा अववुध्य पूर्वैः पूर्वकालभवैः जनकादिभिः मुमुक्षुभिः मोक्षाभिलाषुकैः कर्म युद्धाग्निहोत्रा दिककार्यं कृतं विधत्तं तस्मात्कारणत् त्वं अर्जुनः कर्म वक्ष्यमाणयुद्धादिकार्य कुरु विधेहि कुतः पूर्वैः पुरातनकालभवै र्मन्वादिभिः पूर्वतरं पुरातनं कर्म कृतं अनुष्ठितम् ॥१५॥

पूर्वके मुमुक्षुओंने भी ऐसा जान फलेच्छा छोड़कर कर्म किये हैं, इस लिये तूमी उन पूर्वके पूर्वजों के अनुसार निष्कामभाव सेही कर्म कर ॥१५॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्

किं कीदृशं कर्म कर्तव्यं किं कीदृशं अकर्म अकर्तव्यं इति प्रश्नेऽर्थे अत्र अस्मिन् विषये कवयोऽपि मेधाविनोऽपि मोहिता मोहं भ्रमं प्राप्ताः तत् तस्मात् कारणात् ते तुभ्यमर्जुनाय कर्म कर्तव्यं प्रवक्ष्यामि संदेहाऽभावपूर्वकं सम्यगव बोधयिष्यामि यत्कर्म यत्कर्तव्यं ज्ञात्वा बुद्ध्वा अशुभात् अकल्याण रूपात्संसारात् मोक्ष्यसे मुक्तो भविष्यसि ॥१६॥

परंतु कर्म क्या है और अकर्म क्या है, इस विषयमें बड़े बड़े पंडितभी चक्करमें पड़ेहैं, इसलिये तुझे वह कर्म कहता हूं कि जिसको जान कर तू अशुभसे छूटेगा. ॥१६॥

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७

हीति निश्चयेन कर्मणः शास्त्रविहितकर्तव्यस्य स्वरूपं बोधव्यम् ज्ञातव्यम् । विकर्मणः शास्त्रप्रतिषिद्धस्य स्वरूपं बोधव्यं निश्चितव्यम् । तथा अकर्मणः मौनभावस्य कर्तव्यस्य च स्वरूपं

बोधव्यं ज्ञातव्यम् । कुतः कर्मणः योग्यकर्तव्यस्य प्रतिपिद्धस्याऽ कर्तव्यस्य च गतिः यथार्थज्ञानं गहना दुर्विज्ञेया ॥१७॥

करने योग्य कर्मका, विपरीत कर्मका और अकर्म (कर्मरहित) होने का तत्त्व भी जानने योग्य है, क्योंकि कर्मकी गति बड़ी गहन है. ॥१७॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥

यो जनः कर्मणि क्रियमाणेकार्ये अकर्म कर्माऽभावं पश्येत् अवलोकयेत् (कृतमपिकर्म मया न कृत मिति, बुद्ध्या पश्यति इतिभावः)अकर्मणि च अक्रियमाणे कार्ये च कर्म पश्येद् अवलोकयेत् स जनःमनुष्येषु मानवेषु बुद्धिमान् प्रज्ञावान् स एव युक्तः योगी तथा कृत्स्नं सम्पूर्ण कर्म कार्यं करोति कृत्स्नकर्मकृत् सम्पूर्णकर्म फलभागी भवति ॥१८॥

जो कर्ममें अकर्म और अकर्ममें कर्मको देखता है, वही सारे मनुष्योंमे बुद्धिमान, योगी और समस्त कर्मोंका कर्ता है. ॥१८॥

यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पंडितं बुधाः ॥१९

यस्य पूर्वोक्तदर्शिनः सर्वे संपूर्णां समारभ्यन्ते इति समारम्भाः सम्पूर्णकार्यारम्भाः (कर्माणि) कामेन फलेन संकल्पेन मनो वांच्छया वर्जिताः रहिताः भवन्ति ज्ञानमेव अग्निस्तेन ज्ञानाऽग्निना ज्ञानवह्निना दग्धानि भस्मीभूतानि कर्माणि कर्तव्यानि यस्य तं बुधाः पण्डितं शास्त्रज्ञं आहुः कथयन्ति ॥१९॥

जिसके सारे कर्म फलेच्छासे और संकल्पसे रहित हैं, ऐसे ज्ञानाग्निसे जले हुए कर्मोवाले पुरुषकोही बुद्धिमान् लोग पंडित कहते है. ॥१९॥

## त्यक्त्वा कर्मफलाऽसंगं नित्यतृप्तो निराश्रयः ।
## कर्मण्यभिप्रवृत्तोपि नैव किंचित्करोति सः ॥२०

यो जनः कर्मणः कर्तव्यस्य फलैरासङ्गं फलासंगं फलेच्छाऽऽसक्तिं त्यक्त्वा परित्यज्य नित्यतृप्तः मन्निष्ठया प्रतिदिनं तृप्तिंप्राप्तः निर्गत आश्रयो यस्य स निराश्रयः दृष्टाऽदृष्ट फल साधनाश्रयरहितः कर्मणि कर्तव्ये अभिप्रवृत्तोपि मदाज्ञया कार्ये संलग्नोपि स जनः नैव किंचित् करोति विदधाति ॥२०

क्योंकि कर्मफलकी आसक्तिको त्याग कर सदा संतुष्ट तथा निरभिमानी रहनेवाला मनुष्य कर्ममें प्रवृत्त रहकरभी कुछ नहीं करता ॥२०॥

## निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
## शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥

निराशीः निर्गता आशिषो यस्मात् स निराशीः निस्पृहः यतचित्तात्मा यतौ वशीकृतौ चित्तात्मानौ इन्द्रियदेहौ येन सः त्यक्त सर्वपरिग्रहः त्यक्तः परित्याजितः सर्वः संपूर्णः परिग्रहः पशु पुत्रधनादि येन सः केवलं शारीरं शरीरस्थिति साधनमात्रं कर्म कर्तव्यं कुर्वन् विदधन् किल्बिष मनिष्टरूपं पापं नाप्नोति न प्राप्नोति ॥२१॥

फलाशा रहित, स्वाधीन चित्तवाला॰ और सर्व परिग्रहका त्याग करनेवाला पुरुष केवल शारीरिक कर्म करनेसे पापको नहीं पाता. ॥२१॥

## यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ।
## समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ।

यदृच्छया अकस्मात् भगवदिच्छया लाभेन प्राप्तधनादिला भेन संतुष्ट स्तृप्तिमुपागतः द्वन्द्वैः सुखदुःखादिभि रतीतः अखिन्नः विमत्सरः विगतो यातो मत्सरो यस्य स निर्वैरबुद्धिः सिद्धौ कार्यसफलतायां असिद्धौ कार्यविफलतायां च सम

स्तुल्य एवं भूतोजनः कृत्वापि कार्यं कृत्वाऽपि न निबध्यते मरणजन्मादि बन्धनं नैति ॥२२॥

सहजप्राप्त लाभसे संतुष्ट, रागद्वेषादि द्वंद्व और मत्सरसे रहित तथा कार्यकी सिद्धि असिद्धिमें समभाव वाला पुरुष कर्मको करता हुआ भी पापपुण्यसे बंधायमान नहीं होता. ॥२२॥

**गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३**

गतसंगस्य गतो यातः संगो लौकिकवस्तुप्रीति र्यस्य तस्य मुक्तस्य निवृत्तधर्माऽधर्मादिबन्धनस्य ज्ञानेऽवस्थितं चेतो यस्य तस्य ज्ञानावस्थित चेतसः ज्ञानसंलग्नचेतसः यज्ञाय भगवदानन्दकन्दाय आचरतः कर्मकुर्वतः पुरुषस्य समग्रं सम्पूर्णं कर्म प्रविलीयते विनश्यति ॥२३॥

आसक्तिरहित, ज्ञानमें स्थिरचित्तवाले, और यज्ञके लिये आचरण करनेवाले मुक्त पुरुषके समग्र कर्म नष्ट हो जाते हैं. ॥२३॥

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥।**
**ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥२४.**

अर्प्यते समर्प्यतेऽनेनेति अर्पणं मंत्र स्रुकस्रुवादिकं ब्रह्मैव हविः घृतादिकं द्रव्यजातमपि ब्रह्मैव अग्नौ यद्द्रव्यं ब्रह्मणा कर्मकर्त्रा हुतं समर्पितं तदपि ब्रह्मैव एवमनेन प्रकारेण सर्व खलु कर्म ब्रह्मैव अतः समाधिना समाध्यवस्थया तेन ब्रह्मात्म केन कर्मणा ब्रह्मैव गन्तव्यं प्राप्तव्यम् ॥ २४ ॥

अर्पण ब्रह्म है, हवि ब्रह्म है और ब्रह्मरूप अग्निमें ब्रह्मरूप होमने वालेके द्वारा होमा हुआ पदर्थ भी ब्रह्म है, इस प्रकार ब्रह्मबुद्धिपूर्वक उस ब्रह्मरूप कर्ममें समाधिस्थ होनेवालेको गतव्य (प्राप्त होने योग्य) भी ब्रह्म ही है. ॥२४॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५

अपरे केचिद्द योगिनः कर्मयोगिनः दैवं देवताप्रधानं यज्ञं दर्शपौर्णमासादिकं ( देवा इज्यन्ते येन यज्ञेन तद्द दैवं यज्ञं ) पर्युपासते परितः सर्वभावेन कुर्वन्ति । अपरे अन्ये ब्रह्मविदः ब्रह्मैवाग्निः ब्रह्माग्निस्तस्मिन् ब्रह्माग्नौ ब्रह्मरूपवन्हौ यज्ञं आत्मानं यज्ञेन आत्मना उप जुह्वति प्रक्षिपन्ति ॥२५॥

कोई योगी देवयज्ञ को ही उपासते हैं और दूसरे यज्ञ को ही (आत्माको) यज्ञ (आत्मा से) ब्रह्माग्निमें होमने हैं ॥२५॥

श्रोत्रादीनींद्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इंद्रियाग्निषु जुह्वति ॥२६

अन्ये केचिद् योगिनः—श्रोत्र आदिर्येषां तानि श्रोत्रादीनि कर्ण चक्षुरादीनि एकादशेन्द्रियाणि विषयसाधकानि संयमाश्चित्तनिरोधाएवाग्नयस्तेषु संयमाग्निषु चित्तनिरोधकवन्हिषु जुह्वति भस्मीभूतं कुर्वन्ति । तथा अन्ये भक्तियुक्तयोगिनः शब्द आदिर्येषां तान् शब्दादीन् पञ्चविषयान् इन्द्रियाण्येवाग्नयस्तेषु इन्द्रियाग्निषु ज्ञानवह्निषु जुह्वति होमंकुर्वन्ति । श्रोत्रादि ग्राह्यान् विषयान् स्ववशे कुर्वन्ति ॥२६॥

कोई श्रोत्रादि इन्द्रियोंको संयमरूप अग्नि में होमते हैं और कोई शब्दादि विषयोंको इन्द्रिय रूप अग्निमें होमते हैं ॥२६॥

सर्वाणींद्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७

अपरे केचिद् योगिनः सर्वाणि संपूर्णानि इन्द्रियाणां चक्षुरादीनां कर्माणि कृत्यानि तथा प्राणस्य प्राणवायोः कर्माणि श्वासोच्छ्वासानि ज्ञानेन दीपिते ज्ञानप्रज्वलिते आत्मनः चित्तस्य

संयमः सम्यगवरोधएवाग्नयस्तेषु आत्मसंयमाग्निषु जुह्वति मक्षिपन्ति ॥२७॥

दूसरे सारी इन्द्रियों के और प्राणोंके कर्मो को ज्ञानसे प्रज्वलित आत्मसंयमरूप योगाग्नि में होमते हैं. ॥२७॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितवृताः ॥२८

यतयःयत्नशीलाः सम्यक् शितानि तनू कृतानि व्रतानि यैस्ते संशितवृताः दुरारुहवृतकर्तारः केचित् तीर्थेषु धर्मक्षेत्रेषु द्रव्यदानं यज्ञबुद्धया ये कुर्वन्ति ते द्रव्ययज्ञाः धनदानशीलाः भवन्ति अपरे केचनः योगः प्रणायामप्रत्याहारादिलक्षणो योगो येषां ते योगयज्ञाः अष्टांगयोगकर्तारः भवन्ति तथा अन्ये स्वाध्यायः यथाविधि वेदाभ्यासो यज्ञो येषां ते स्वाध्ययययज्ञाः शास्त्राध्ययनमेव यज्ञबुद्धया कर्तारः भवन्ति तथा केचिद्र ज्ञानं शास्त्रार्थपरिज्ञानं योगो येषां ते ज्ञानयज्ञाः अर्थज्ञानाभ्यास परा भवन्ति ॥२८॥

दूसरे कोई दृढ़ व्रतवाले योगी द्रव्ययज्ञ कोई तपयज्ञ, कर्म योगरुपी यज्ञ, कोई स्वध्याययज्ञ, और कोई ज्ञानयज्ञ करनेवाले

होते हैं ॥२८॥

**अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥२९**

अपरे योगिनः अपाने अपानवायौ प्राणं प्राणवृत्तिं जुह्वति प्रक्षिपन्ति कुम्भकाख्यं प्रणायामं कुर्वन्ति तथाऽपरे केचित् रेचकविधिना प्राणे प्राणवायौ अपान मपानवृत्ति गुदवायुव्यापारं जुह्वति प्रक्षिपन्ति अवरोधयन्ति रेचकाख्यंप्राणायामं कुर्वन्ति । प्राणः पूणवायुः अपानः अपानवायुः गुदवायु रतयोर्गती मुख नासिकागुदेभ्यो बहिर्गमने रुद्ध्वा अवरोधंकृत्वा विधाय प्राणायामे प्राणापानवायुरोधने परायणं सामर्थ्यं येषां ते प्राणायामपरायणाः ईश्वरचिन्तननिष्ठावन्तो भवन्ति कुम्भकाख्यं प्राणायामं कुर्वन्ति ॥२६॥

प्राणायाम परायण कोई योगी प्राणापानकी गतिको रोककर प्राणको अपानमें होमते हैं, कोई अपानको प्राणमें होमते हैं, ॥२६

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०**

नियतः परिमित आहारो भोजनं येषां ते नियताहाराः

परिमितस्वल्पभोजनाः एककालभोक्तारः संतोषवन्तोऽपरे योगिनः प्राणान् वायुभेदान् प्राणेषु एतन्नामक वायुभेदेषु जुह्वति प्रक्षिपन्ति सर्वेऽपि समेऽपि यज्ञं विदन्ति इति यज्ञविदो यज्ञस्वरूप ज्ञातारः यज्ञैः पूर्वोक्तयज्ञैः क्षपितः नाशितः कल्मषः पापो येषां ते यज्ञक्षपितकल्मषः यज्ञनाशितपापो भवन्ति ॥३०॥

और दूसरे नियत आहार वाले प्राणोंको प्राणोंमें ही होमते हैं यज्ञ से पापों को नष्ट करने वाले यह सारे ही योगी यज्ञों के जानने वाले (अनुभवी) हैं. ॥३०॥

## यज्ञशिष्टामृतभुजो यांति ब्रह्म सनातनम् ।
## नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥

यज्ञानां शिष्टमवशेषं यज्ञशिष्टं, यज्ञशिष्टञ्च तदमृतं पीयूषं यज्ञशिष्टामृतं तद्भुञ्जत इति यज्ञशिष्टामृतभुंजः यज्ञावशेषा मृतभोजिनः सदा युगे युगे भवतीति सनातनं चिरंतनं ब्रह्म अक्षरात्मकं यान्ति गच्छन्ति कुरुपुसत्तमः कुरुसत्तमस्तत्सम्बुद्धौ हे कुरुसत्तम हे सत्कुलोत्पन्न यज्ञानां मध्ये यस्यैकोपि नास्ति सोऽयज्ञस्तस्य अयं सर्वप्राणि साधारणोपिलोको नास्ति ( अस्मिन् मृत्युलोकेऽपि तस्योऽत्पत्तिर्नभवति किन्तुसदैव नरकाऽभ्यागत इति ) अन्यः परलोकः आत्मलोको वा कुतो

भवेत् न कुतश्चिदित्यर्थः ॥३१॥

यज्ञके परिणामरूप ज्ञानामृतको पानेवाले सनातन ब्रह्मको प्राप्त होते हैं. यज्ञरहितको जब यह लोकही नहीं,तब हे कुरुश्रेष्ठ, परलोक कहां ॥३१॥

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥**

एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञा यज्ञकर्माणि ब्रह्मणो वेदस्य मुखे द्वारे वितता विस्तरिताः वेदद्वारेण गुरुभिरुपदिष्टाः वेदे एव सर्वेषां यज्ञाना मुल्लेखः। अतस्तान् सर्वान् सम्पूर्णान् कर्मजान् कायिकवाचिकमानसकर्मोद्भवान् विद्धि जानीहि नतु आत्मजानित्यर्थः। एवं पूर्वोक्त प्रकारेण ज्ञात्वा बुद्ध्वा अस्मा त्संसारबन्धनात् विमोक्षसे मुक्तो भविष्यसि ॥३२॥

ऐसे बहुत प्रकारके यज्ञ वेद वाणीमें विस्तारसे कहे हैं, उन सबको क्रियासेही होने वाले जान. ऐसा जाननेसे तूभी (निष्काम कर्मरूप योग यज्ञ करके) विमुक्त होगा. ॥३२॥

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥३३॥**

हे परंतप हे ज्ञानयोग्य द्रव्यमयात् धनसाधनसाध्यात् यज्ञात् दर्शपौर्णमासादियज्ञात् ज्ञानयज्ञः ज्ञानात्मको यज्ञःश्रेयान् प्रशस्ततरः सर्वोत्तमः कुतः सर्वं सम्पूर्णं कर्म यज्ञादि अखिलं अप्रतिबद्धं ज्ञाने आत्मज्ञाने परिसमाप्यते अन्तर्भवति तिरोधीयते ॥३३

परन्तु हे परंतप, द्रव्यमय यज्ञकी अपेक्षा ज्ञानमय यज्ञ श्रेष्ठ है क्योंकि हे पार्थ, सारे कर्म ज्ञानमें परिसमाप्त होते हैं ॥३३॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥३४

तद्र ज्ञानप्राप्तिक मुपायं विद्धि जानीहि येनविधिना तत्प्राप्यते प्रकर्षेण नीचै प्रपतनं प्रणिपातस्तेन प्रणिपातेन दीर्घ नमस्कारेण कथं बन्धः कथं मोक्षः का विद्या का अविद्या चेति परिप्रश्नेन प्रश्नोत्तरेण सेवया गुरुशुश्रूषया तत्वदर्शिनः आत्मविदः ज्ञानिनः सम्यग् ज्ञानवन्तः ते तव अर्जुनस्य ज्ञानं तत्वज्ञानं उपदेक्ष्यन्ति उपदेशं करिष्यन्ति ॥ ३४ ॥

उस ज्ञानको तू साष्टांग प्रणामसे, पुनः पुनः प्रश्न करनेसे तथा सेवासे समझले तत्त्वदर्शी ज्ञानी तुझे इसका उपदेश करेंगे ॥३४॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पांडव ।

येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५

हे पाण्डव हे पाण्डुपुत्र महर्षिभिरुपदिष्टं यत् ज्ञानं ज्ञात्वा बद्ध्वा पुनर्भूय एवं (तथेदानीं मोहंगतोसि) तथा न यास्यसि न प्राप्स्यसि किन्तु येन ज्ञानेन भूतानि ब्रह्मादीनि स्तम्ब पर्यन्तानि अशेषेण साकल्येन यदा आत्मनि स्वदेहावस्थितात्मनि अथोअपि मयि वासुदेवे परमेश्वरे च द्रक्ष्यसि अवलोकयिष्यसि ॥ ३५ ॥

इस ज्ञानको पाकर हे पांडव! तू फिर ऐसे मोहको प्राप्त न होगा, और समस्त भूतोंको तू अपने तथा मेरे में देखेगा ॥३५॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥३६

अपिचेत् यदि त्वमर्जुनः सर्वेभ्यः सम्पूर्णेभ्यः पापेभ्यः पापकृद्भ्यः पापीष्ठेभ्यः पापकृत्तमोऽसि अतिशयेन पापियान्नसि तर्हि सर्वं सम्पूर्णं वृजिनं पापमाहार्णवं ज्ञानमेव लवः ज्ञानलवस्तेन ज्ञानलवेन ज्ञाननौकया संतरिष्यसि पापरहितो भविष्यसि ॥३६

तू सारे पापियोंसे अधिक पाप करनेवाला होगा तोभी इस ज्ञानरूपी नौकासे उस सारे पापरूपी समुद्रको तर जायगा ॥३६॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७**

हे अर्जुन यथा येन प्रकारेण समिद्धः सम्यगिद्धः दीप्तोऽग्निः वह्नि रेधांसि काष्ठानि भस्मसात् भस्मीभूतं कुरुते तथा ज्ञान मेवाग्निः ज्ञानाग्निः ज्ञानवह्निः सर्वाणि च तानि कर्माणि सर्व कर्माणि सम्पूर्णकर्माणि भस्मसात् भस्मीभावं कुरुते निर्बीजी करोति ॥ ३७ ॥

हे अर्जुन जैसे जलता हुआ अग्नि काष्ठोंकोभस्मी भूत कर देता है, वैसा ज्ञानरूपी अग्नि समग्र कर्मोंको भस्मीभूत कर देता है ॥३७॥

**न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विंदति ॥३८**

हि इतिनिश्चयेन इहलोके ज्ञानेनआत्मज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरं न विद्यते न भवति तत् ज्ञानं स्वयं स्वयमेव योगेन कर्मयोगेन समाधियोगेन च संसिद्धःसंस्कृतः योग्यता मापन्नः पुरुषः कालेन महता समयेन आत्मनि स्वात्मनि विन्दति लभते ॥ ३८ ॥

निश्चय इस लोकमें ज्ञान जैसी दूसरी पवित्र वस्तु नहीं है कर्मयोगको सिद्ध करनेवाला पुरुष उस ज्ञानको चिरकालमें अपने आपभी अपने हृदयमें जान सक्ता है॥ ३८

**श्रद्धावांल्लभते ज्ञानं तत्परः संयतेंद्रियः।**
**ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति॥३९**

तत्परः गुरूपासनादावभि युक्तः गुरुभक्तिसंलग्नः संयतानि विषयेभ्यो निवर्तितानि इन्द्रियाणि चक्षुरादीनि येन सः संयतेन्द्रियः श्रद्धा विद्यते यस्य स श्रद्धावान् श्रद्धालुः ज्ञानं आत्म ज्ञानं लभते प्राप्नोति ज्ञानं आत्मज्ञानं लब्ध्वा प्राप्य परा मुक्त्यर्थां मोक्षाख्यां शान्ति मुपरतिं अचिरेण शीघ्रमेव लभते अधिगच्छति॥ ३९॥

श्रद्धावाला जितेंद्रिय पुरुष तत्परायण याने सर्व भावसे उस ज्ञान के ही अभ्यास में लगा रहनेवाला-होने से उस ज्ञानको शीघ्र पाता है और ज्ञान को पाकर शीघ्र परम शान्ति ( मोक्ष ) को प्राप्त होता है॥३९॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥४०**

• संशयात्मा भविष्यति नवेति सन्देहवान् अज्ञः मूर्खः अनात्मज्ञः अश्रद्दधानश्च गुरौ ज्ञानसाधनेषु च श्रद्धारहितः विनश्यति नष्टो भवति किंच संशयात्मनः संशयचित्तस्य सन्देहवतः अयं साधारण लोकोऽपि नास्ति न विद्यते न परो लोको न सुखं च विद्यते। तस्मात् संशयो न कर्तव्यः ॥ ४० ॥

अज्ञानी, और श्रद्धाहीन संशयात्मा तो नष्ट ही होता है ऐसे संशयात्माको न यह लोक है न परलोक है न सुख है न शांति है ॥४०॥

## योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
## आत्मवंतं न कर्माणि निबध्नन्ति धनंजय ॥ ४१

हे धनंजय हे अर्जुन योगेन कर्मण्यकर्मदर्शनात्मकेन संन्यस्तानि फलतः त्यक्तानि कर्माणि धर्माऽधर्माख्यानि येन तं योगसंन्यस्तकर्माणं योगत्यक्तधर्माऽधर्माणं ज्ञानेन आत्मेश्वरै कत्वदर्शनलक्षणेन छिन्नः नाशितः संशयः सन्देहो येन तं ज्ञान संछिन्नसंशयं ज्ञानविनाशितसन्देहं आत्मवंत मात्मज्ञानवन्तं कर्माणि धर्माऽधर्माणि कार्याणि न निबध्नंति न बन्धकानि भवन्ति ॥

योगबुद्धिपूर्वक कर्मोंको ईश्वरार्पण करने वाले कर्मयोगीको, ज्ञानसे संशयोंको छेदनेवाले जिज्ञासुको, तथा आत्मसाक्षात्कार वाले जियन मुक्तको हे धनंजय, कर्म बाँध नहीं सकते ॥४१॥

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥**

यस्मात् संशयेन नश्यति तस्मात् अज्ञानात् अविवेकात् संभूतं जातं हृत्स्थं हृदि बुद्धौस्थितं आत्मनः स्वस्य एनं प्रत्यक्ष मनुभूयमानं संशयं सन्देहं ज्ञान मेवासि खड्गस्तेन ज्ञानासिना ज्ञानात्मक खड्गेन छित्वा भित्वा योगं सम्यग्दर्शनो पायं आतिष्ठ कुरु, हे भारत हे भरतकुलोत्पन्न इदानीं युद्धाय उत्तिष्ठ उद्युक्तोभव ॥ ४२ ॥

इस लिये हे भारत, अपने हृदयमें रहे हुए इस अज्ञान जन्य संशयको ज्ञानरूपी खड्ग से काटकर निष्कामता व ईश्वरार्पणरूप योगबुद्धिको धारण कर, और युद्धके लिये खड़ा हो ॥४२॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मब्रह्मार्पणयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

———:०:———

# पंचमोऽध्यायः ।

अर्जुन उवाच ॥

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥**

हे कृष्ण हे आनन्दैकदानयोग्य कर्मणां कर्तव्यानां संन्यासं त्यागं शंससि कथयसि पुनः भूयः योगं च शंससि भाषसे एतयो ज्ञानयोगकर्मयोगयो र्द्वयोर्मध्ये यदेकं केवलं श्रेयः कल्याणकरं तत् तदेव मे मम अर्जुनस्य सुनिश्चितं संशयरहितं ब्रूहि कथय ॥ १ ॥

हे कृष्ण, आप कर्मसन्यासको और फिर कर्मयोगकोभी सराहते हैं, परन्तु इनमें जो एक श्रेष्ठ तथा सुनिश्चित हो वही मुझे कहिये ॥१॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥

यस्मात् संशयेन नश्यति तस्मात् अज्ञानात् अविवेकात् संभूतं जातं हृत्स्थं हृदि बुद्धौस्थितं आत्मनः स्वस्य एनं प्रत्यक्ष मनुभूयमानं संशयं सन्देहं ज्ञान मेवासि खड्गस्तेन ज्ञानासिना ज्ञानात्मक खड्गेन छित्वा भित्वा योगं सम्यग्दर्शनो पायं आतिष्ठ कुरु, हे भारत हे भरतकुलोत्पन्न इदानीं युद्धाय उत्तिष्ठ उद्युक्तोभव ॥ ४२ ॥

इस लिये हे भारत, अपने हृदयमें रहे हुए इस अज्ञान जन्य संशयको ज्ञानरूपी खड्ग से काटकर निष्कामता व ईश्वरार्पणरूप योगबुद्धिको धारण कर, और युद्धके लिये खड़ा हो ॥४२॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मब्रह्मार्पणयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

———:o:———

# पंचमोऽध्यायः ।

अर्जुन उवाच ॥

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥

हे कृष्ण हे आनन्दैकदानयोग्य कर्मणां कर्तव्यानां संन्यासं त्यागं शंससि कथयसि पुनः भूयः योगं च शंससि भापसे एतयो र्ज्ञानयोगकर्मयोगयो र्द्वयोर्मध्ये यदेकं केवलं श्रेयः कल्याणकरं तत् तदेव मे मम अर्जुनस्य सुनिश्चितं संशयरहितं ब्रूहि कथय ॥ १ ॥

हे कृष्ण, आप कर्मसन्यासको और फिर कर्मयोगकोभी सराहते हैं, परंतु इनमे जो एक श्रेष्ठ तथा सुनिश्चित हो वही मुझे कहिये ॥१॥

श्री भगवानुवाच ॥

**संन्यासः कर्मयोगश्च निःश्रेसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥२॥**

संन्यासः कर्मणां त्यागः कर्मयोगश्च कर्मानुष्टानञ्च उभौ द्वावप्येतौ निःश्रेयस्करौ मोक्षोत्पादकौ तथापि तयोस्तु निःश्रेयस हेत्वोः कर्मसंन्यासात् कर्मत्यागात् केवलात्, कर्मयोगः कर्मानुष्ठानश्च विशिष्यते सर्वस्मादुत्तमो भवति ॥ २ ॥

कर्मसंन्यास और कर्मयोग दोनोंही कल्याणकारक हैं, परंतु इनमेंभी कर्मसंन्यासको अपेक्षा कर्मयोग विशेष सुगम है ॥२॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बंधात्प्रमुच्यते ।३ ।**

हे महाबाहो हे बृहद्भुज यो जनः न द्वेष्टि न केनापि सहवैरं करोति न कांक्षन्ति नकिमपि वस्तुजालमभिलषति सः पूर्वोक्तः नित्यसंन्यासीति ज्ञातव्यः सर्वत्यागीति बोधव्यः निर्द्वन्द्वः सर्वलौकिकोपद्रवरहितः सुखं सुखपूर्वकं बन्धात् जन्ममरणादि बन्धनात् प्रमुच्यते मुक्तो भवति ॥ ३ ॥

जो किसी प्राणी पदार्थ का द्वेष भी नहीं करता और इच्छा भी नहीं करता, उसको सदा सन्यासी ही जान क्योंकि हे महाबाहो, ऐसा निर्द्वन्द्व पुरुष ही सुखपूर्वक बंधन से मुक्त होता है ॥३॥

सांख्ययोगौ पृथग्बालाः प्रवदंति न पंडिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥४॥

एकीभावेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनेनेति संख्या तत्साधनभूतः सांख्यः संन्यासः सर्वकर्मत्यागः सांख्यश्च योगश्च सांख्ययोगौ ज्ञानपूर्वकसर्वकर्मत्यागकर्मयोगौ पृथग् विरुद्ध भिन्नफलकौ बालाः स्तनंधयाः मूर्खाः प्रवदन्ति कथयन्ति कथं एकमपि सम्यक् शोभनप्रकारेण आस्थितोऽनुतिष्ठन् कुर्वन् उभयोः सर्वकर्मत्यागकर्मयोगयोः फलं निश्रेयसाख्यंफलं विन्दते लभते ॥ ४ ॥

संन्यास और योग को अज्ञानी ही भिन्न भिन्न फल के देने वाले कहते हैं पंडित नहीं कहते क्योंकि दोनोंमेंसे किसीभी एक में भली भांति स्थित होनेवाला दोनोंके फलको पाता है ॥४॥

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति।

सांख्यै ज्ञाननिष्ठैः संन्यासिभिः यत्स्थानं मोक्षाख्यंपदं प्राप्यते लभ्यते तद्वमोक्षाख्यंपदं योगैरपि योगकर्तृभिरपि गम्यते प्राप्यते यो जनः सांख्यं सर्वकर्मपरित्यागं योगं च कर्मयोगश्च एकं केवल मेकमेव मोक्षाख्यदायकं पश्यति अवलोकयति स पुरुषः पश्यति आत्माभिन्नंमामीश्वरं सम्यग् अवलोकयति ॥ ५ ॥

जिस स्थानको सांख्यवाले पाते हैं, उसी स्थानको योगवाले भी पाते हैं इसलिये सांख्य और योग दोनोंको जो एकही फलके देनेवाले जानता है वही यथार्थ जानता है ॥५॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥

संन्यासस्तु ज्ञानयोगस्तु अयोगतः कर्मयोगं विना दुखं दुःखेन आप्तुं प्राप्तुं शक्यः योगयुक्तः कर्मयोगयुक्तः मुनिः मननशीलः नचिरेण अल्पकालेनैव ब्रह्म अधिगच्छति प्राप्नोति ॥६॥

परंतु हे महाबाहो, कर्मयोगको साध्य किये बिना कर्मसंन्यास प्राप्त होना बड़ा कठिन है और योगयुक्त संन्यासी ब्रह्मको शीघ्र पाता है ॥ ६ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेंद्रियः ।

सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥

योगेन युक्तः योगयुक्तः योगाभ्यासेरतः विशुद्धः पवित्री भूत आत्मा यस्य स विशुद्धात्मा पूतात्मा विजितः वशीकृत आत्मा देहो येन स विजितात्मा विजितदेहः जितानि वशीकृतानि इन्द्रियाणि चक्षुरादीनि येन स जितेन्द्रियः पराजितेन्द्रियः सर्वेषां ब्रह्मादीनां भूतानां प्राणिसमूहानां आत्मभूत उपादानत्वेन स्वरूपभूत आत्मा यस्य स सर्वभूतात्मभूतात्मा सम्यग् दर्शी कुर्वन्नपि लोकसंग्रहाय कर्म विदधन्नपि न लिप्यते कर्मभिर्न बध्यते ॥ ७ ॥

ऐसा शुद्ध चित्त, मनोजित, जितेंद्रिय तथा सर्व भूतों के आत्मारूप एक अखंड परमात्माको अपना आत्मा जाननेवाला योग युक्त संन्यासी कर्मोंको करता हुआभी लिप्तनहीं होता॥७।

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन्
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥
इंद्रियाणींद्रियार्थेषु वर्तंत इति धारयन् ॥८॥

युक्तः योगयुक्तः समाधिनिष्ठः आत्मनो यथात्म्यं तत्वं वेत्तीति तत्त्ववित् आत्मदर्शी पश्यन् अवलोकयन् शृण्वन् आकर्णयन् स्पृशन् स्पर्शं कुर्वन् जिघ्रन् गन्धं ग्रहणं कुर्वन् अश्नन् भोजयन् गच्छन् गमनं कुर्वन् स्वपन् शयानः श्वसन् श्वासं निःसारयन् प्रलपन् प्रलापं कुर्वन् गृह्णन् ग्रहणं विदधन् उन्मिषन् नेत्रोन्मीलयन् निमीषन् नेत्रनिमीलयन् इन्द्रियाणि चक्षुरादीनि इन्द्रियार्थेषु स्वस्वविषयेषु वर्तन्ते इति धारयन् निश्चिन्वन् नैव किंचित्करोमि अहं किमपि न विदधामि इति मन्येत ज्ञायेत ॥८, ६

क्योंकि योगयुक्त तत्त्वज्ञानी देखता, सुनता, स्पर्श करता, सूंघता, खाता, चलता, सोता, श्वास लेता, बोलता, त्यागता, ग्रहण करता, तथा नेत्रादिको खोलता और मूंदता हुआभी "इन्द्रियांही इन्द्रियोंके विषयमें वर्त्तती हैं" ऐसा निश्चयवाला होनेसे"मैं (सदा अकर्ता, निर्लेप, और नित्य-शुद्ध-मुक्त आत्मा) कुछभी नहीं करता ऐसा समझता है ॥८॥६॥

**ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥१०॥**

ब्रह्मणि सर्वान्तर्यामिणि परब्रह्मणि कर्माणि कर्तव्यानि आधाय समर्प्य संगं फलसंगं त्यक्त्वा परित्यज्य यो जनः कर्माणि

करोति विदधाति सः पुरुषः अम्भसा जलेन पद्मपत्रमिव कमल पत्रमिव पापेन न लिप्यते न संबध्यते ॥ १० ॥

जो पुरुष विषयासक्ति छोड ब्रह्मार्पण करके कर्मोको करता है, वह (कर्मयोगी) भी जल कमलकी तरह पापसे लिप्त नहीं होगा ॥

कायेन मनसा बुद्ध्या केवलैरिंद्रियैरपि ।
योगिनः कर्म कुर्वंति संगं त्यक्त्वाऽऽत्मशुद्धये ११

योगिनः योगसाधनवन्तः कायेन देहेन मनसा चेतसा बुद्ध्या प्रज्ञया केवलैरिन्द्रियैरपि इन्द्रियमात्रैरपि संगं त्यक्त्वा फलसंगमपहाय आत्म शुद्धये चित्तशुद्ध्यर्थं कर्म कर्तव्यं कुर्वन्ति विदधन्ति ॥ ११ ॥

क्योंकि कर्मयोगी पुरुष केवल कायासे, मनसे, बुद्धिसे किंवा इन्द्रियोंसेभी जो कुछ कर्म करते हैं, सो फलासक्तिको छोड चित्त शुद्धिके लियेही करते हैं ॥११

युक्तः कर्मफलंत्यक्त्वा शांतिमाप्नोतिनैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ।१२।

युक्तः योगयुक्तः कर्मफलं कर्मफलासंगं त्यक्त्वा परित्यज्य

निष्ठायां भवां नैष्ठिकीम् ब्रह्मनिष्ठाफलभूतां शान्तिं मोक्षाख्यां आप्नोति प्राप्नोति पुनः अयुक्तः असमाहितः फलेच्छया कर्म कर्ता कामस्य कारः कामकारस्तेन कामकारेण काम प्रेरिततया फले कर्मलाभे सक्तः लग्नः निबध्यते बन्धन माप्नोति ॥१२

कर्मयोगी इस प्रकार कर्मफलका त्याग करनेसे ज्ञाननिष्ठायुक्त उत्तम शांतिको पाता है, और कामना करके फलमें आसक्त रहनेवाला अयोगी पुरुष कर्मसे बंधायमान होता है ॥१२॥

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्नकारयन् ॥ १३ ॥

वशी जितेन्द्रियः देही प्राणी मनसा चेतसा सर्वाणि च तानि कर्माणि सर्वकर्माणि नित्यनैमित्तिककाम्यनिषिद्धानि संन्यस्य संत्यज्य नव द्वारं यस्मिन् तस्मिन् नवद्वारे कर्णादि नवद्वारविशिष्टे पुरे पुरस्थानापन्ने देहे नैव कुर्वन् नैव किंचित् स्वयं कर्तुमिच्छन् नैव कारयन् नैव चक्षुरादिविषयग्राहकै रिन्द्रियैः विषयग्रहणं कारयन् आग्राहयन् सुखं अतीवानन्द पूर्वकं आस्ते विलषति ॥ १३ ॥

स्वाधीन चित्तवाला ज्ञानयोगी भी मन करके सारे कर्मोंका त्याग करदेता है, इस लिये नव द्वार वाले इस देह नगर में सुख से

रहते हुएभी वह नतो कुछ करता है और न कुछ करवाता है॥ १३

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

प्रभुः परमात्मा कस्यचिद्व वस्तुजातस्य संसारस्य न कर्तृत्वं नोत्पादकः । नैव लोकस्य कर्माणि सृजति निर्मिमीते न कर्मणा फलसंयोगं व्यापार जन्यफलसंयोगं सृजति उत्पादयति स्वस्यभाव स्वभावस्तु अविद्यालक्षणा प्रकृति माया दैवरूपा प्रवर्तते प्रवृत्तो भवति ॥ १४ ॥

लोगोंके कर्तापनेको, कर्मोंको, और कर्म फलके संयोगको, आत्मा नहीं रचता।, किन्तु स्वभावयाने प्रकृति से ही ये सब प्रवृत्त होते हैं ॥ १४ ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ॥१५॥

विभुः व्यापक ईश्वरः कस्यचिद्व भक्तस्य पापं नाऽऽदत्ते न गृह्णाति न चैव सुकृतं पुण्यं आदत्ते गृह्णाति अज्ञानेन ज्ञानं विवेकविज्ञानं आवृतं आच्छादितं तेन अज्ञानेन जन्तवः प्राणिनः

मुह्यन्ति मोहं गच्छन्ति ॥ १५ ॥

आत्मा किसीके पापकोभी नहीं लेता और पुण्यकोभी नहीं लेता, अज्ञानकरके ज्ञान ढक जाने से ही प्राणी इस विषय में धोखा खाते हैं ॥ १५ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ।१६।

येषां जन्तूनां आत्मनः आत्मसम्बन्धिनः तत् पूर्वोक्त मज्ञानं तु अज्ञानान्धकारं तु ज्ञानेन विवेकविज्ञानेन विशिष्ट ज्ञानेन नाशितं विध्वस्तं तत्परं अज्ञान्नाशाऽनन्तरं तेषां प्राणिनां आदित्येन तुल्य मादित्यवत् भगवान् भास्करवत् ( यथा सर्वान् घटपटादिपदार्थजातान् सूर्यः प्रकाशयति तद्वत् ) ज्ञानं आत्म सम्बन्धिविशिष्ट ज्ञानं ( ज्ञेयं सर्ववस्तु जातं ) प्रकाशयति प्रकटयति ॥ १६ ॥

जिनका वह अज्ञानआत्माके ज्ञानसे नष्ट हुआ है, उनका ज्ञान ही सूर्यकी तरह उस परमात्माको दिखादेता है ॥१६॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

तस्मिन्नीश्वरे गना संलग्ना बुद्धिः पूज्ञा येषां ते तद्बुद्धयः परमात्मनि मग्नधियः तदेव परंब्रह्म आत्मा येषां ते तदात्मानः परब्रह्मस्वरूपाः तस्मिन् परब्रह्मणि एव निष्ठाऽवस्थानं स्थिति येषां ते तन्निष्ठाः भगवदर्पितसर्वभावाः तदेव आत्मप्रत्यक्षी करणमेव परमुत्कृष्टमयनं साधनं परागतिराश्रयो येषां ते तत्परायणाः केवलाऽस्मरतयः ज्ञानेन आत्मज्ञानेन निर्धूत उन्मूलीकृतो विनाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषाः विशिष्टज्ञानविनाशितपापाः अपुनरावृत्ति मोक्षं मोक्षपदं गच्छन्ति यान्ति न तेषां पुनर्जन्ममरणादिक मिति भावः ॥१७

परंतु उस परमात्मामें ही बुद्धिवाले, उसीमें मनवाले, उसीमें निष्ठावाले, और उसीके परायण रहनेवाले ही इस प्रकार परमात्मा के साक्षात्कार रूप अपरोक्ष ज्ञान सेपापों को नष्टकर पुनर्जन्म रहित मोक्षपदको जा पहुंचते हैं ॥१७॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।**
**शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥१८॥**

विद्या च शास्त्रज्ञानं च विनयश्च उपशमश्च विद्याविनयौ ताभ्यां सम्पन्नो युक्त स्तस्मिन् विद्याविनयसम्पन्ने विदुषि

विनीते च ब्राह्मणे गवि गोत्वजातिविच्छिन्ने हस्तिनिगजे शुनिच कुक्कुरपदवाच्ये च श्वपाचितं येन स श्वपाकस्तस्मिन् श्वपाके चाण्डाले च पण्डिताः सदसद्विवेकवन्तोविद्वांसः समदर्शिनो भवन्ति चराचरं जगद् ब्रह्मदृष्टयैव पश्यन्ति न तेषां भेद भावः ॥ १८ ॥

ऐसे जीवनमुक्त ज्ञानी पुरुष विद्याविनययुक्त ब्राह्मणमें, गायमें हाथीमें,कुत्तेमें, और चांडालमें भी समदृष्टिवाले होते हैं ॥१८॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ।

येषां जनानां मनश्चेतः साम्ये सर्वभूतेषु समभावेस्थितं निश्चली भूतं(सर्वप्राणिसमूहेषु एकमेव ब्रह्मपश्यन्ति) हि यस्मात् निर्दोषं स्पृश्याऽस्पृश्यदोषरहितं समं समानं ब्रह्म अस्ति । तस्मात् कारणात् ते सर्वत्र समदर्शिनः ब्रह्मणि परमात्मनि स्थिताः विद्यमानाः भवन्ति ॥१६॥

इस प्रकार जिनका मन समभाव में स्थित है, उन्होंने इसी लोकमें जन्ममरणको जीतलिया है. क्योंकि ब्रह्म निर्दोष और सम होनेसे वो ब्रह्ममें ही स्थित हैं ॥१६॥

**नप्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०**

प्रियं इष्टंवस्तु प्राप्य लब्ध्वा न प्रहृष्येत् हर्षं न कुर्यात् अप्रियं अनिष्टंवस्तु प्राप्य लब्ध्वा नोद्विजेत् न उद्वेगं विषादं कुर्यात् स्थिरा निश्चला बुद्धिः प्रज्ञा यस्य सः स्थिरबुद्धिः निश्चल प्रज्ञः असंमूढः मोहरहितः ब्रह्मवेत्ति इति ब्रह्मवित् ब्रह्मज्ञः ब्रह्मणि सदानन्दघने परमात्मनि स्थितः वर्तमानो भवति ॥२०॥

जो प्रियको पाकर हर्षित नहीं होता और अप्रियको पाकर दुःखी नहीं होता, ऐसा स्थिर बुद्धिवाला निर्मोही ब्रह्मवेत्ता ब्रह्ममेंही स्थित है ॥२०॥

**बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखम्**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥२१॥**

स्पृश्यन्ते इति स्पर्शाः शब्दादयो विषयाः बाह्याश्च बहिर्भूताश्च ते स्पर्शाश्च बाह्यस्पर्शास्तेषु बाह्यस्पर्शेषु शब्दगन्धश्रवणादि विषयेषु लौकिकेन्द्रियविषयेषु असक्तोऽसंलग्न आत्मा्न्तः

करणं यस्य सोऽसक्तात्मा अनासक्तचित्तः विषयेषु प्रीतिवर्जितः आत्मनि स्वकीयात्मनि यत्सुखं परमानन्दं विन्दति लभते ब्रह्मणि चिदानन्दे योगः समाधि स्तत्र युक्तो योजित आत्मा अन्तः करणं येन स ब्रह्मयोगयुक्तात्मा ब्रह्मवेत्ता सः पूर्वोक्त आत्मनि तदेव अक्षयं अविनश्वरं सुखं परमानन्द मश्नुते भुङ्क्ते मोक्षं प्राप्नोतीत्यर्थः ॥२१॥

परंतु बाह्य विषयोंमें अनासक्त पुरुषही स्थिर बुद्धिमें जो विलक्षण सुख है उसको जान सकता है, और परब्रह्मका साक्षा. त्कार पाकर मोक्षके अक्षय सुखको अनुभव करता है. ॥२१॥

**ये हि संस्पर्शजाः भोगा दुःखयोनय एव ते ।**
**आद्यंतवंतः कौंतेय न तेषु रमते बुधः ॥२२॥**

हि यस्मात् ये संस्पर्शजाः संस्पर्शेभ्यो विषयेन्द्रियसम्बन्धेभ्य श्चक्षुरादिभ्यः जाता उत्पन्ना भोगा भुक्तयः ते पूर्वोक्ता दुःखं क्लेशप्रदं योनिः कारणं येषां ते दुःखयोनयः क्लेशकारणैक भूताः एवनिश्चयेन तथा आद्यन्तवन्तश्च आदयश्च अन्ताश्च ते विद्यन्ते येषां ते आद्यन्तवन्तः अनित्याश्च हे कौंतेय ! हे कुन्तीपुत्र ! तेषु बाह्यस्पर्शेषु बुध आत्मज्ञोविद्वान् न रमते

नानुरागं कुरुते ॥२२॥

इंद्रियोंके स्पर्शजन्य यह जो आभास मात्र सुखोपभोग है, वो सारेही आदिअंतवाले और दुःखदायक हैं, इस लिये हे कौंतेय, बुद्धिमान् पुरुष उनमें नहीं रमता ॥२२॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।२३।

यो जनः इहैव अस्मिन्नेवलोके कामश्चक्रोधश्च कामक्रोधौ ताभ्यामुद्भवो यस्य तं कामक्रोधोद्भवं कामक्रोधजनितं वेगं जवं शरीरस्य देहस्य विमोक्षणं मोचनं तस्मात् शरीरविमोक्षणात् अलौकिकदेहावाप्तिकालात् प्राक् पूर्वं सोढुं सहन कर्तुं शक्नोति समर्थोभवति सः पुरुषः युक्तः योगी भवति तथा स एव नरः मनुष्यः सुखी च जायते ॥२३॥

शरीर छूटनेसे पहले इस लोकमेंही जो पुरुष कामक्रोधजन्य वेगको सह सकता है, वही नर, वही योगी और वही सुखी है ॥२३॥

योऽतःसुखोऽतरारामस्तथांतर्ज्योतिरेव यः ।
स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति २४

विषय भोगान् शब्दादीन् वहिः कृत्वा श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशयित्वा अन्तर्बुद्धौ प्रवेशनेन नियमनेन ते वहिरेव कृता भवन्ति । अनेन प्रत्याहार उक्तो भवति चक्षुश्चैव नेत्रंचैव भ्रुवोः भ्रुकुट्योः अवान्तरे मध्ये कृत्वा विधाय खेचरींमुद्राम्भ्यस्येत्यर्थः प्राणश्च प्राणवायुश्च अपानश्च अपानवायुश्च प्राणापानौ वायुविशेषौ समौ तुल्यौ उर्ध्वाऽधोगति भेदेन नासाऽभ्यन्तरे चरत इति नासाऽभ्यन्तरचारिणौ नासिका भ्यन्तरेऽवरोधनं कृत्वा कुम्भकेन प्राणायामेन स्थित्वा सदामुक्त एव भवतीत्यग्रे संवन्धः ॥२७॥

वाह्य विषयोंको दूर कर दृष्टिको भ्रुओंके बीच स्थिर करके, तथा नासिकाद्वारा चलनेवाले प्राण-अपानको समान करके ॥२७

यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः २८

संयतानि वशीकृतानि इन्द्रियाणि चक्षुरादीनि मनश्चेतो बुद्धिः प्रज्ञा च येन स यतेन्द्रियमनोबुद्धिः पराजितेन्द्रियशक्तिः मोक्षएव परमुत्कृष्टमयनं परागतिर्यस्य स मोक्षपरायणः मोक्षैकप्रयो जन इच्छा च अभिलाषाच भयंच क्रोधश्च इच्छाभयक्रोधास्ते

विगता याता निवृत्ता यस्मात् स विगतेच्छाभयक्रोधः व्यावृत्ताभिलाषादिकः य एवं भूतो मुनिः मननशीलः स सदा मुक्त एव न तस्य मोक्षोऽन्यः कर्तव्योऽस्ति ॥२८॥

जिस ने इन्द्रिय, मन और बुद्धि को स्वाधीन किये हैं, और जो इच्छा, भय तथा क्रोध से छूटा हुआ है, ऐसा मोक्ष परायण (अष्टांग योगी) मुनिभी सदा मुक्त ही है ॥ २८ ॥

भोक्तारं यज्ञतपसां सर्वलोक महेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति २९

यज्ञाश्च तपसश्च तेषां यज्ञतपसां यज्ञानां क्रतूनां तपसां तपश्चर्याणां कर्तृरूपेण देवतारूपेण च भोक्तारं भोगकर्तारं सर्वलोकमहेश्वरं सर्वेषां संपूर्णानां लोकानां जगतां महान्तं बृहन्तमीश्वरं जगन्नियन्तारं सर्वेच ते भूताश्च सर्वभूता स्तेषां सर्वभूतानां सर्वप्राणिनां सुहृदं उपकारकरणे मित्रं मां नारायणं ज्ञात्वा बुद्ध्वा शान्ति सर्वसंसारोपरति पुनरागमनाऽभाव मृच्छति प्राप्नोति ॥२९॥

मुझे सारे यज्ञ और तपोका भोक्ता, सारे लोकोंका महान

ईश्वर, तथा सारे प्राणियोंका परम सुहृद् जान कर उस परम सच्चिदानन्दमय निर्वाण (मोक्ष) की शांतिको पाते हैं ॥२९॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मब्रह्मार्पणयोगो नाम पंचमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः ।

श्रीभगवानुवाच ॥

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः**

यः पुरुषः कर्मणः फलं कर्मफलं न आश्रितोऽनाश्रितः अनपेक्ष्यमाणः कर्मफलतृष्णारहितः कार्यं कर्तुयोग्यं कर्माग्निहोत्रादिकं करोति निर्वर्तयति सः पूर्वोक्तः संन्यासः परित्यागोऽस्याऽस्तीति संन्यासी च सर्वकर्मपरित्यागनशीलो भवति योगश्चित्तसमाधानमस्यास्तीति योगी समाधिनिष्ठश्च भवति निर्गता अग्नयोऽग्निहोत्रादिकाक्रिया यस्मादसौ निरग्नि अग्निहोत्रादि कर्म रहित स्तथाऽक्रियश्च क्रियारहितश्च योगी न भवति ॥१॥

जो पुरुष कर्मफल की इच्छा छोडकर कर्तव्य कर्म करता है वही संन्यासी और वही योगी है अग्निरहित क्रिया क्रियारहित नहीं ॥१॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पांडव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥२॥

पाण्डोरपत्यं पाण्डवस्तत्संबुद्धौ हे पाण्डव ! हे पाण्डुतनय ! श्रुतिस्मृतिविदो यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यास मित्येवं प्रकर्षेण स्वात्मभावरूपेणाहुः कथयन्ति तं पूर्वोक्तं सर्वोत्कृष्टं सर्वस्मादधिकं योगं चित्तनिरोधनरूपसमाधिं विद्धि जानीहि हि यस्मात्कारणात् असंन्यस्तोऽपरित्यक्तः फलविषयः संकल्पो कर्ममानसं येन सोऽसंन्यस्तसंकल्पः त्यक्तमानसव्यापारः कश्चन कश्चिदपि योगी समाधानवान्भवति न जायते ॥२॥

हे पांडव, जिसको संन्यास कहते हैं उसेभी तू योगही जान क्योंकि संकल्पका संपूर्ण संन्यास-त्याग किये बिना कोईभी पूरा योगी नहीं हो सकता ॥२॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥

योगं योगाऽभ्यास मारुरुक्षो रारोढु मिच्छोर्मुनेः मनन शीलस्य श्रौतस्मार्ताग्निहोत्रादिकं कर्म कारणं साधनं मुच्यते कथ्यते पुनः योगारूढस्य योगाङ्गानुष्ठानेमवृत्तस्य तस्यैवशम ।

उपसमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधन मुच्यते विधीयते ॥३॥

योगमें प्रवेश करनेकी इच्छावाले मुनिके लिये कर्मको साधन रूप कहा है, और योगमें आरूढ होनेकी इच्छावालेके लिये उस कर्म के त्यागकोही साधनरूप कहा है ॥३॥

यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥४॥

यदा यस्मिन्समये समाधीयमानचित्तो योगी हीन्द्रियार्थे ष्विन्द्रियाणामर्थाः शब्दादयस्ते ष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिक काम्यप्रतिषिधेषु च प्रयोजनाभावबुद्ध्या नानुषज्जतेऽनुषङ्गं कर्तव्यताबुद्धिं न करोति सर्वान्संपूर्णान्संकल्पानिहामुत्रार्थकाम हेतून् संन्यसितुं शीलमस्येति सर्वकर्मसंन्यासी योगारूढः प्राप्तयोग इत्येतत्तदा तस्मिन्काले उच्यते ॥४॥

निष्काम कर्म करते करते योगी जब इन्द्रियोंके विषयमें और कर्ममें आसक्त नहीं होता है तथा अंतर्मुख होकर सारे संकल्पोंको छोड़ देता है, तभी वह योगारूढ कहा जाता है ॥४॥

उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ।

आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥५॥

संसार सागरे निमग्न मात्मानं जीव मात्मनैव विषयाशक्ति रहितेन मनसा उद्धरेत् उद्धारं कुर्यात् नात्मानं जीव मवसादयेत् अधःपातयेत् हि यस्मात् आत्मैव मनएवात्मनो जीवस्य बन्धुर्हित कृद्द भवति आत्मैव मनएव आत्मनो जीवस्य रिपुः शत्रुः न त्वन्ये शत्रवः संसारे मज्जयितु मेनं क्षमा इत्यर्थः ॥५॥

अपना मनही अपना बंधु और मनही अपना शत्रु है, इसलिये मनुष्य इस मनद्वारा अपनी अधोगति न करके उद्धार ही करे ॥५॥

बंधुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥

तस्यात्मनो जीवस्यात्मा मनो बन्धु हितकृच्चास्ति येनात्मना मनसा आत्मा जितः वशीकृतः अनात्मनस्तु अजीतात्मनस्तु आत्मैव शत्रुवत् शत्रुतुल्यं वर्तेत ॥६॥

विवेकबुद्धिसे जिसने मनको वश किया उसका मन उसका बंधु है, और जिसने वश नहीं किया उसका मन उसके शत्रुकी तरह वर्तता है ॥६॥

**जितात्मनः प्रशांतस्य परमात्मा समाहितः ।**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥७॥**

जितो वशीकृत आत्मा मनोयेन तस्य जितात्मनः पराजित मनसः प्रशान्तस्य प्रसन्नान्तःकरणस्य शीतं च उष्णञ्च सुखंच दुःखञ्च तेषु शीतोष्णसुखदुःखेषु तथा मानञ्च, अपमानञ्च तयोः मानापमानयोः परमात्मा समाहितः साक्षादात्मभावेन वर्तते ॥७॥

मनको जीतने वाले प्रशात पुरुषकी बुद्धि शीत-उष्ण, सुख-दुःख और मान-अपमानादि द्वंद्वोंमें समान (निश्चल) रहती है ॥७।

**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेंद्रियः ।**
**युक्त इत्युच्यते योगी समलोष्ठाश्मकांचनः ॥८॥**

ज्ञानेन शास्त्रज्ञानेन विज्ञानेन आत्मज्ञानेन च तृप्तआत्मा चित्तं यस्य सः ज्ञानविज्ञानतृप्तात्मा कूटस्थो विकाररहितो विजितानि स्वायत्तीकृतानि इन्द्रियाणि येन सो विजितेन्द्रियः भोगादि विषयकेच्छारहितः समानि तुल्यानि लोष्ठाश्मकांचनानि मृत्पाषाणसुवर्णानि यस्य स समलोष्ठाश्मकांचन एवं विधो योगी युक्तः

प्राप्तयोग इत्युच्यते विद्वद्भिरिति शेषः ॥ ८ ॥

ऐसा निश्चल बुद्धिवाला, ज्ञान विज्ञानकर के तृप्त, जितेंद्रिय, तथा ढेले, पत्थर और सोनेमें समदृष्टि वाला योगीही योगयुक्त कहा जाता है ॥८॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥

सहृत् प्रत्युपकार मनपेक्ष्योपकारकर्ता मित्रं स्नेहवान् अरिः शत्रुः उदासीन उभयत्रपक्षपातशून्यः मध्यस्थो विवदमानयोः सदसद्वाक्यविचारकः द्वेष्य आत्मनोऽप्रियः बन्धुः सम्बन्धी तेषु साधुषु पुण्यकृत्सु पापेषु पापाचारेषु ,कस्य किं कर्मेत्यनालोचयन् तेषु सर्वेषु यः समबुद्धिः तुल्यप्रज्ञः स विशिष्यते ॥९॥

जो योगी सुहृद्, मित्र, शत्रु, उदासीन, मध्यस्थ द्वेषपात्र, और बंधु, साधु तथा पापीमें भी समबुद्धिवाला है वह श्रेष्ठ है ॥९॥

योगी युंजीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

योगी योगाभ्यासतत्परः रहसि एकान्ते गिरिगुहादौस्थितः समाहितः सन् एकाकी असहायः यतौ स्थिरीकृतौ चित्तं मन आत्मा सेन्द्रियंशरीरं येन स यतचित्तात्मा अपरिग्रहः एकाकित्वेऽपि कन्थापुस्तकादिबहुपरिग्रहशून्यः सततं सर्वदात्मान मन्तः करणं युञ्जीत योगाभ्यासं कुर्यात् ॥ १०॥

ऐसे श्रेष्ठ योगकी इच्छावाला योगी अकेला एकांतमें स्थित होकर, मन-इन्द्रियोंको वशमें लाकर तथा इच्छा और परिग्रहसे रहित होकर चित्तको निरंतर योगाभ्यास मे लगावे ॥१०॥

## शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
## नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ११

शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने नात्युच्छ्रितं नात्युच्चं नातिनीचं नाप्यतिनीचं चैलं वस्त्र मजिनं मृगचर्म कुशाश्च दर्भास्त्वोत्तरे यस्मिन्नासने तदासनं चैलाजिन कुशोत्तरं आत्मनः स्वस्य स्थिरमचल मासनं प्रतिष्ठाप्य सुस्थिरं कृत्वा ॥ ११ ॥

पवित्र स्थानमें न अति ऊंचा, न अति नीचा तथा दर्भके ऊपर मृगचर्म और वस्त्रयुक्त अपना स्थिर आसन स्थापन करे, ॥११ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेंद्रियक्रियः ।
उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥१२॥

तत्र तस्मिन्नासने उपविश्य स्थितिं कृत्वा मनश्चेत एकाग्रं कृत्वा सर्वविषयेभ्य उपसंहृत्य चितञ्च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयता निगृहीता येन स यतचित्तेन्द्रियक्रियः निगृहीतेन्द्रियव्यापारः सन् आत्मनः चित्तस्य विशुद्धिस्तस्यै आत्मविशुद्धये अन्तःकरणस्य विशुद्धयर्थं योगं युंज्यात् चित्तवृत्तिनिरोधं कुर्यात् ॥ १२ ॥

तथा उस आसनपर बैठ कर आत्मविशुद्धि के लिये चित्त और इन्द्रियों की क्रियाको वश करता हुआ मन को एकाग्र करके योगाभ्यास में लगावे॥ १२ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।१३

कायश्च देहश्च शिरश्च मूर्धाच ग्रीवाच कायशिरोग्रीवं समं अवक्रं अचलं निष्कंपं धारयन् कारयन् स्थिरः स्थिरो भूत्वा स्वं स्वकीयं नासिकाग्रं नासिकाऽग्रभागं संप्रेक्ष्य सम्यक् प्रेक्षणं कृत्वा दिशश्च आशाश्च अनवलोकयन् दिक्षुमध्ये चित्ताकर्ष

कान् विषयान् अपश्यन् ॥१३॥

शरीर मस्तक और गर्दनको सीधे तथा अटोल रखकर किसी दिशाको न देखताहुआ साधक अपने नासिकाग्रमें दृष्टि लगावे ॥१३

**प्रशांतात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः।१४।**

प्रकर्षेण शान्त आत्माऽन्तःकरणं यस्य सोयं प्रशान्तात्मा शान्तचित्तः विगता याता भी र्यस्य स विगतभीः विगतभयः ब्रह्मचारिणोव्रतं ब्रह्मचारिव्रतं तस्मिन् ब्रह्मचारिव्रते भैक्ष्यचर्य गुरुशुश्रुषादौ स्थितः वर्तमानः मनः संयम्य मनसोवृत्ति रुपसंहृत्य मपि परमेश्वरे एव चित्तं यस्य स मच्चित्तः मय्येवसमर्पित मानसः अहमीश्वर एव पर उत्कृष्टतमो यस्य स मत्परः युक्तः समाहितः सन् आसीदुपविशेत् ॥ १४ ॥

तथा शान्तचित्त, भयरहित और ब्रह्मचर्यव्रतवाला होकर, मनको रोकता हुआ मुझे ही सब कुछ व सर्व श्रेष्ठ जान कर चित्त को मुझमे गलावे ॥ १४ ॥

**युंजन्नेवं सदाऽऽत्मानं योगी नियतमानसः।**
**शांतिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५**

एव मनेन प्रकारेण सदा निरन्तरं दीर्घकालं च आत्मानं मनो युञ्जन् समादधानो योगी समाधिनिष्ठः नियतं संयतं मानसं मनो यस्य सोऽयं नियतमानसः निगृहीतचेताः सन् निर्वाणं मोक्षस्तत्परमोत्कृष्टा निष्ठा यस्याः शान्तेः सा निर्वाण परमा तां निवार्णपरमां उत्कृष्टमोक्षरूपां मय्येव संस्था एकी भावेनावस्थानं यस्यास्तां मत्संस्थां मदधीनां शान्तिं उपरतिं अधिगच्छति प्राप्नोति ॥ १५ ॥

मनको वश रखनेवाला योगी इस प्रकार चित्तको सदा मुझमें लगाता हुआ मेरे स्वरूपभूत निर्वाण की परम शान्ति को प्राप्त होता है ॥ १५ ॥

**नात्यश्नतस्तु योगोऽस्ति न चैकांतमनश्नतः।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥**

हे अर्जुन अत्यश्नतः देहपुष्ट्यर्थ मधिकभुञ्जानस्य योगो समाधानं नास्ति न विद्यते एकान्तं रहसि अश्नतः भोक्तुर्योगो न चास्ति अतिस्वप्नशीलस्य अतिनिद्राशीलस्य योगो न चास्ति तथा जाग्रतश्च निद्रारहितस्य च नैव योगोऽस्ति ॥ १६ ॥

अति खानेवालेको कुछभी न खानेवालेको, अति सोनेवालेको और अति जागनेवालेको हे अर्जुन, यह सिद्ध नहीं होता ॥१६॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥

कथं पुनर्योगो भवतीत्युच्यते आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौनियतपरिमाणौ यस्य तस्य युक्ता हारविहारस्य समये युक्तभुञ्जानस्य कर्मसु वैदिकाग्निहोत्र पूजनादि व्यापारेषु युक्ता नियता चेष्टा यस्य तस्य युक्तचेष्टस्य स्वप्नश्च अवबोधश्च तौ युक्तौ नियतकालौ यस्य तस्य युक्तस्वप्नावबोधस्य नियतशयनज्ञानवतः सर्वाणि दुःखानि हन्तीतिदुःखहा सर्वसंसारदुःखक्षयकृद् योगो भवति ॥

उचित आहार विहार वाले, कर्मोंमे योग्य चेष्टावाले और उचित प्रमाणसे सोने-जागनेवालेकोही यह योग दुःखनाशक होता है ॥१७॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८

यदा यस्मिन्समये प्रयोजनविषयं चित्तं मानस मात्मन्येव विनियतं विशेषेण नियतं निरतिशयप्रयोजनतया तत्रैव नियतं निश्चल मवतिष्ठते स्वात्मन्येवस्थितिं लभते तदा तस्मिन्काले

सर्वकामेभ्यः सर्वप्रयोजनेभ्यः निःस्पृहः निर्गता स्पृहा तृष्णा यस्यैवंभूतः सन् युक्तः योगार्ह इत्युच्यते ॥१८॥

साधकका संपूर्ण वशीभूत (एकाग्र) किया हुआ चित्त जब सारे विषयोपभोगोंसे निस्पृह हो कर आत्मामेंही भली प्रकार स्थित निरुद्ध होता है, तभी उसको "युक्त" याने आत्मामें जुटाहुआ कहा जाता है ॥१८॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युंजतो योगमात्मनः ॥१९

यथा येनप्रकारेण निवातेतिष्ठतीति निवातस्थः वातवर्जिते देशे स्थितो दीपःप्रदीपः नेङ्गते न चलति सा दीपस्योपमा तुल्यता यतं चित्तं येन तस्य यतचित्तस्य संयन्तान्तःकरणस्य आत्मनः स्वस्य योगं योगाभ्यासं युञ्जतः कुर्वतः योगिनो ध्यानिनः विद्वद्भिः स्मृता कथिता ॥१९॥

योगीके ऐसे (आत्मामें जुटेहुए) निरुद्ध चित्तको वायुरहित स्थानमें स्थित अडोल दीपककी उपमा दीगई है ॥१९॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥

यत्र यस्या मवस्थायां योगसेवया योगाभ्यासेन निरुद्धं सर्व विषयेभ्यो व्यावृत्तं चित्तं मन उपरमते उपरतिं गच्छति यत्रैव यस्मिन्श्चैवकाले आत्मना शुद्धान्तःकरणेन आत्मानं परं चैतन्यज्योतिः स्वरूपं पश्यन्नवलोकयनुपलभमानः स्वात्मन्येव तुष्यति तुष्टो भवति ॥२०॥

इस प्रकार योगाभ्यासद्वारा अन्य चिंतनोंसे उपराम होकर निरुद्ध चित्त, जिस दशामें आत्माने आत्माको देखता हुआ आत्मामें ही मग्न हो रहता है ॥ २० ॥

सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम्।
वेत्ति यत्न न चैवायं स्थितश्चलति तत्त्वतः॥२१॥

यत्रावस्थाविशेषे यद्बुद्धिग्राह्यं मत्यैवगृहीतुंशक्यं अतीन्द्रियं इन्द्रियविषयाऽतीतमस्तितद्ध आत्यन्तिकं निरतिशयं सुखं वेत्ति जानाति तत्रात्मस्वरूपे स्थितो विद्यमानोऽयं विद्वान् तत्वतः तत्वस्वरूपात् न चैव विचलति न प्रच्यवते ॥२१॥

तथा इन्द्रियों से अगम्य और बुद्धि से ही ग्राह्य हो सके ऐसे अनुपम आत्म सुख को अनुभव करता है जिस दशामें क्षण मात्रभी स्थित होनेवाला योगी तत्त्वसे कभी चलित नहीं होता.॥२१॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।

किञ्चिदपि पदार्थजातं चिन्तयेत् ध्यायेत् ॥२५॥

धैर्ययुक्त विवेक बुद्धिसे धीरेधीरे अनित्य वस्तु स्थितियों से उपराम होवे, और चित्तको अविनाशी आत्मा चिन्तन में ही स्थिर करके अन्य कुछभी चिन्तन न करे ॥ २५ ॥

**यतो यतो निश्चरति मनश्चंचलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥**

यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेः अचल यतीव चञ्चलं अतएवस्थिरं स्थिरतारहितं मनश्चेतो निश्चरति निर्गच्छति यस्मिन् २ विषये धावति ततस्ततः तस्मात्तस्माच्छ ब्दादेर्निमित्तात् नियम्य अवरुद्ध्य आत्मन्येव वशंनयेत् आत्म वश्यता मापादयेत् ॥२६॥

यह चंचल और अस्थिर मन दूसरे जिस २ विषयमें जावे वहां वहांसे उसको विवेकबुद्धिद्वारा हटाकर आत्मचिंतनमेंही लगावे ॥२६

**प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ।**
**उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥२७॥**

शान्तंरजो यस्य तं शान्तरजसं प्रक्षीणमोहादिक्लेशरजसं

विनष्टीकृत रजोगुणं ब्रह्मभूतं सर्वंब्रह्मैवेति निष्चयवन्तं जीवन्मुक्तं अकल्मषं निष्पापं प्रशान्तं मनोयस्य तं प्रशान्तमनसं शान्तचित्तं एनं योगिनं समाधिवन्तं उत्तममुत्कृष्टं सुखं मोक्षाख्यं उपैति प्राप्नोति ॥२७॥

ऐसा अभ्यास करनेवाले प्रशान्तचित्त, रजस रहित, निष्पाप और ब्रह्मभूत योगी कोही वह उत्तम सुख प्राप्त होता है ॥२७।

युंजन्नेवं सदाऽऽत्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यंतं सुखमश्नुते ॥२८॥

एव मनेन प्रकारेण सदा निरन्तरमात्मानं मनोयुञ्जन् समादधानः विगतं कल्मषं यस्य स विगतकल्मषः विगतपापः योगी सुखेनाऽनायासेन ब्रह्मणा परेण संस्पर्शोयस्येति ब्रह्मसंस्पर्श ब्रह्मानुभवरूपं अत्यन्तमुत्कृष्टं सुखमानन्दं अश्नुते प्राप्नोति ॥२८॥

पापरहित योगी इस प्रकार चित्तको सदा आत्मामें लगाता हुआ सुख मे ब्रह्मसाक्षात्कार के आत्यन्तिक सुखको अनुभव करता है ॥ २८ ॥

सर्व भूतस्थमात्मानं सर्वभूतानि चात्मनि ।

तुल्येन सर्वत्र सर्वप्राणिवर्गेषु सुखमानन्दं वा यदि वा दुःखं कष्टं समं समानं पश्यति। अवलोकयति स योगी परम उत्कृष्टोमतः ज्ञातव्यः ॥३२॥

हे अर्जुन! जो योगी सुख और दुःखको अपनीही तरह सबको समान होता हुआ देखता है वह परम श्रेष्ठ माना गया है ॥३२॥

अर्जुन उवाच।

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।**
**एतस्याहं न पश्यामि चंचलत्वात्स्थितिंस्थिराम्**

मधूनि सूदयतीति मधुसूदनस्तत्संबुद्धौ हे मधुसूदन! हे कृष्ण! योऽयं पूर्वोक्तोयोगो योगाभ्यासस्तया श्रीवासुदेवेन साम्येन समभावेन अहिंसाप्राधान्येन संन्यासपूर्वकतया प्रोक्तः वर्णितः एतस्य योगस्य सर्ववृत्तिनिरोधस्य मनसश्चञ्चलत्वात् स्थिरां निश्चलां स्थितिं अहं नपश्यामि नावलोकयामि ॥३३॥

हे मधुसूदन आपके कहे हुए इस समय बुद्धिसे प्राप्तहोनेवाले योगकी स्थिरता मनकी चंचलताके कारण मैं नहीं देखता ॥३३

**चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।**

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ३४

भक्तजन पापादि दोषान् कृषतीति कृष्णस्तत्सम्बुद्धौ हे कृष्ण ! हि निश्चयेन मनः चञ्चलमतीवचपलं प्रमाथि मथन शीलं बलवत् अतिप्रबलं दृढञ्चास्ति अतस्तस्य मनसः वायोरिव सुदुस्करं दुःखेनाप्यकर्तुमशक्यं निग्रहं निरोधं अहंमन्ये जानामि ॥ ३४ ॥

क्योंकि हेकृष्ण, यह मन बड़ा चंचल, इन्द्रियोंका मथन करने वाला और महा बलवान् है, इसलिये उसका रोकना वायुको रोकने के समान मैं अत्यंत कठिन मानता हूं ॥३४॥

श्रीभगवानुवाच ॥

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते ॥३५॥

हे महाबाहो ! हे दृढ़भुज ! मनोदुर्निग्रहं चञ्चलं च यद्द वदसि तदसंशयं निसन्दिग्धं तादृशमेव तु पुनस्तथाऽपि हे कौन्तेय ! हे अर्जुन ! अभ्यासेन योगाऽभ्यासेन वैराग्येण मोह त्यागाद्युपायेन गृह्यते वशीक्रियते ॥३५॥

हे महाबाहो निश्चय यह मन चंचल है और इसका वशमें होना कठिन है, परंतु हे कौंतेय, अभ्यास और वैराग्यसे यह भी वश में आता है ॥३५॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ।**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ३६**

उक्त प्रकारेणाभ्यासवैराग्याभ्यामसंयतोऽवशीकृत आत्मा-ऽन्तःकरणंयस्य स एतेन असंयतात्मना अवशीकृतान्तः करणेन पुरुषेण योगः दुष्प्राप्य दुःखेनापि प्राप्तुमशक्यः इति मे मम श्रीकृष्णस्य मतिः प्रज्ञाऽस्ति यस्तु पुनरभ्यासवैराग्याभ्यां वश्यतामापादित आत्मा मनो यस्यसोऽयं वश्यात्मा तेन वश्या त्मना यतता भूयोपि प्रयत्नं कुर्वता जनेन उपायतः यथोक्तादु पायात् योगः अवाप्तु माप्तुंशक्य इति मे मतिः ॥३६॥

मनको न जीतनेवालेको योग प्राप्त होना कठिन है, परंतु योग्य उपायसे उसको जीत नेवाले प्रयत्नशील पुरुषके लिये तो योग प्राप्त होना शक्य ही है, ऐसा मेरा निश्चय है ॥३६॥

अर्जुन उवाच ॥

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।**

## अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ३७

हे कृष्ण ! योगात्कर्मयोगाच्चलितमानसः त्यक्तकर्मा संन्यासी श्रद्धयाऽऽस्तिक्यबुद्ध्या उपेतः युक्तः अयति आयुषोऽल्पत्वात् वैराग्यदौर्बल्याद्वा अल्पप्रयत्नः स कदाचित् योगसिद्धिं योगफलं अप्राप्य मृतश्चेत्तर्हि कां गतिं गच्छति प्राप्नोति । इतिषद ॥ ३७ ॥

हे कृष्ण, श्रद्धावान् होनेपरभी योग्य प्रयत्न नहीं होसकनेसे जिसका मन योगसे चलित हो गया है, ऐसा पुरुष योगसिद्धिको न पाकर किस गतिको प्राप्त होता है ॥३७॥

## कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
## अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ।३८।

हे महाबाहो ! हे विशालभुज ! उभयात् कर्ममार्गाद्व योगमार्गाच्च, विभ्रष्टः निपतितः अप्रतिष्ठः निराश्रयः ब्रह्मणःपथि ब्रह्मप्राप्तिमार्गे विमूढोऽतिमूढः छिन्नाभ्रमिव छिन्नमेघमिव कच्चित् किं न विनश्यति न नाशंगमिष्यति इति प्रश्नः ॥३८

हे महाबाहो, ऐसा ब्रह्मके मार्गमें अस्थिर व मोहग्रस्त हुआ

पुरुष फटे हुए बादलकी तरह कहीं दोनों ओरसे भ्रष्ट होकर नष्ट तो नहीं हो जाता ॥३८॥

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ३९**

हे कृष्ण ! एतत्पूर्वोक्तं मे ममार्जुनस्य संशयं सन्देहं अशेषतः साकल्येन छेत्तुं नाशयितुमर्हसि योग्योऽसि हि यस्मात् अस्य पूर्वोक्तस्य संशयस्य सन्देहस्य त्वदन्यः भवद्भिन्नः देवऋषिर्वा छेत्ता नाशयिता नोपपद्यते न सम्भवति ॥३९॥

हे कृष्ण, मेरे इस संशयको संपूर्ण काटनेके लिए आपही योग्य हैं, आप के बिना इस का काटने वाला अन्य नहीं मिल सकता है ॥ ३९ ॥

श्रीभगवान उवाच ॥

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।**
**नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ४०**

हे पार्थ ! हे राजन् ! तस्य योगभ्रष्टस्येहलोके विनाशो नीच योनि प्राप्तिः अमुत्र परलोके च विनाशः नरकप्राप्तिस्तदु

भयमपि नैव विद्यते न जायते हेतात हि यतः कल्याणकृत् शुभकृत् दुर्गतिं कुत्सितां गतिं योनिं न गच्छति नैवप्राप्नोति ॥

हे पार्थ, उसका इस लोकमें वा परलोकमें नाश नहीं होता क्योंकि हे तात, शुभ कार्य करने वाला कोई भी दुर्गति को नहीं जाता ॥ ४० ॥

प्राप्य पुण्यकृतांलोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।४१।

योगभ्रष्टः योगपतितः पुण्यकृतां पुण्यवतां लोकान् स्वर्गादीन् प्राप्य तत्र च शाश्वतीः समाः बहु वर्षपर्यन्तं उषित्वा वासंकृत्वा शुचीनां पवित्रीकृतमनसां श्रीमतां धनसम्पत्तिशालीनां गृहेसद्मनि जायते उत्पद्यते ॥४१॥

पुण्यवानोंके स्वर्गादि लोकोंको प्राप्तहोकर तथा वहां बहुत वर्षों तक निवास करके योगभ्रष्ट पुरुष पवित्र श्रीमानोंके घरमें जन्म लेता है ॥ ४१ ॥

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥

अथवा योगभ्रष्टः धीमतां अध्यात्मविद्यावतां दरिद्राणां योगिनां कुले वंशे भवति उत्पद्यते हि निश्चयेन लोके यदीदृशं एतादृशंजन्म एतद्ध दुर्लभतरं अतीव कठिनं चास्ति ॥४२॥

अथवा बुद्धिमान् योगियोंके कुलमें उत्पन्न होता है, इस संसार में इस प्रकार का जन्म होना अन्य के लिये अति दुर्लभ ही है ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनंदन ॥ ४३ ॥

हे अर्जुन ! कुरुनन्दन तत्र योगिनां कुले पूर्वस्मिन्देहे भवं पौर्वदेहिकं तं बुद्धिसंयोगं बुद्धिसंस्कारं लभते प्राप्नोति तत स्तस्मात् पूर्वकृतसंस्कारात् भूयश्च पुनरपि संसिद्धौ संसिद्धिनि मित्तं यतते यत्नं करोति ॥४३॥

वहां उस पूर्वजन्मके बुद्धिसंयोगको वह अनायास ही पालेता है, और हे कुरुनंदन, उससे प्रेरित होकर पुनः योगसिद्धिके लिये प्रयत्न करता है ॥४३॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

हीति निश्चयेन सः योगभ्रष्टः अवशोऽपि परवशोऽपि तेनैव पूर्वोक्तेनैव पूर्वाभ्यासेन पूर्वकृद्योगाभ्यासेन ह्रियते आकृष्य ते योगस्य योगाभ्यासस्य जिज्ञासुरपि अभिलापुकरचेत् तर्हि शब्दब्रह्माति वर्तते वेदप्रतिपाद्य फलादप्यधिकं फलं लभते ।४४

उस पूर्वाभ्यासके बलसे वह विवश होकरके भी योगकी ओर आकर्षित होता है, शब्दब्रह्मको-अर्थात् वेदोक्त सकामकर्म तथा उस के स्वर्गादि फलों को-योग ज्ञान की इच्छा वाला पुरुष भी लाँघ जाता है, ।४४।।

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्म संसिद्धस्ततो याति परां गतिम् ४५

प्रयत्नाद्यतमानस्तु अधिकंप्रयत्नं कुर्वाणस्तु संशुद्धः किल्बिषो यस्य सः निर्धौतपापः योगी अनेकैर्जन्मभिः संसिद्धः अनेकजन्मार्जितपुण्यसंजयो भूत्वा तत स्तदनन्तरं परामुत्कृष्टां गतिं मोक्षाख्यां याति प्राप्नोति ।।४५।।

तथा प्रयत्न से अभ्यास करने वाला और पाप रहित होकर अनेक जन्मोंके पश्चात् भी वह योगसिद्ध होता हुआ परम गतिको पाता है ।।४५।।

तपस्विभ्योऽधिको योगीज्ञानिभ्योऽपिमतोधिकः
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन।

तपस्विभ्यः तपकर्तृभ्यः अधिको योगी भवति तथा ज्ञानिभ्योऽपि शास्त्रीयपाण्डित्यवद्भ्योऽपि योगी अधिक उत्कृष्टोमतः ज्ञातः एवं कर्मिभ्यः अग्निहोत्राद्यनुष्ठातृभ्योऽपि योगी अधिकः कथित स्तस्मात् हे अर्जुन ! त्वं योगी भव ॥ ४६॥

इसी कारणसे तपस्त्रियोंसेभी योगाभ्यासी अधिक, शास्त्र पंडितोंसे भी अधिक तथा कर्मकाण्डियों सेभी अधिक माना गया है इसलिये हे अर्जुन, तू योगी हो ॥ ४६ ॥

योगिनामपि सर्वेषां मद्गतेनांतरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७

सर्वेषां रुद्रादित्यादिध्यानपरायणानां योगिनां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनाऽन्तःकरणेन श्रद्धावान् श्रद्दधानः सन् यो मां वासुदेवं भजते सेवते स मे मम युक्ततमोऽधिकमियो मतोऽभिमत स्तस्मात्त्वं योगी भव ॥४७॥

अनेक प्रकारके सारे योगसाधकोंमें भी जो योगी श्रद्धावान्

होकर मुझमें लगे हुए अंतःकरणसे मेरेको भजता है वह मुझे "युक्त. तम" मान्य है ॥ ४७ ॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ध्यानयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः ।

॥ श्रीभगवानुवाच ॥

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥

हे पार्थ ! हे अर्जुन ! मयि परमेश्वरे आसक्तं मनो यस्य समय्यासक्तमनाः अहं परमेश्वरएवाश्रयो यस्य स मदाश्रयो योगं युञ्जन् समाधानं कुर्वन् असंशयं निःसन्देहं समग्रं समस्तमैश्वर्यादिगुणसम्पन्नं मामीश्वरं यथा येन प्रकारेण ज्ञास्यसि भोत्स्यसि तत् तं प्रकारं शृणु ॥ १ ॥

हे पार्थ ! ( पूर्वाध्याय में कहने के अनुसार ) मुझ में आसक्त चित्त वाला और मेरा ही आश्रित हो कर योग में प्रवृत्त होने से तू निःसंशय मुझे समग्र रूप से किस प्रकार जानेगा सो सुन, ॥ १

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥२

अहं श्रीकृष्णः ते तुभ्यमर्जुनाय सविज्ञानं विज्ञानसहितं इदं स्वानुभवसंयुक्तं ज्ञानं अशेषतः कार्त्स्न्येन वक्ष्यामि कथयिष्यामि यज्ज्ञात्वा यज्ज्ञानंबुद्ध्वा भूयः पुन रन्यज्ज्ञातव्यं नेहावशिष्यते नावशेषो भवति ॥ २ ॥

विज्ञान सहित यह ज्ञान मैं तुझे सपूर्ण कहूंगा, जिस को जान कर फिर तुझे इस लोक मे अन्य कुछ जानना शेप नहीं रहेगा

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥**

मनुष्याणां मध्ये सहस्रेषु अनेकेषु कश्चिदेव सिद्धये सिद्धयर्थ यतति प्रयत्नाधिक्यं करोति तथा च यततामपि यतमानाना मपि सिद्धानां युक्तात्मनां कश्चिदेव मामीश्वरं तत्वतः यथावत् वेत्ति जानाति ॥ ३ ॥

सहस्रों मनुष्यों में कोई एक ही इस ज्ञान को सिद्ध करने का यत्न करता है, और यत्न करने वाले सिद्धों में भी कोई एक ही मुझे तत्त्व से जानता है ॥ ३ ॥

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥**

भूमिः पृथिवी आपो जलानि अनलो वायुः खं आकाशं एवं पञ्चमहाभूतानि मनः संकल्पादिसाधनं बुद्धिर्ज्ञानात्मिका अहंकारोऽभिमानादिरूपः इति अनेन प्रकारेण इयं मे अष्टधा अष्टप्रकारा प्रकृतिः माया भिन्ना विभागं प्राप्ता ॥ ४ ॥

भूमि, जल, अग्नि, वायु, आकाश, मन, बुद्धि और अहंकार, इन आठ प्रकारों में मेरी यह प्रकृति विभक्त है॥ ४॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥५॥

हे महाबाहो ! हे दृढभुज ! इयं मे प्रागुक्ता साऽपरा जड़त्वादश्रेष्ठाइतस्तु विलक्षणामन्यां परामुत्कृष्टां मे मम सम्बन्धिनीं जीवभूतां प्राणधारणनिमित्तभूतां प्रकृतिं विद्धि जानीहि यया प्रकृत्या इदं स्थावरजंगमात्मकं सर्वं जगत् धार्यते ध्रियते पोष्यते च ॥५॥

हे महाबाहो ! यह तो मैंने अपनी निकृष्ट प्रकृति कही इस से उत्कृष्ट दूसरी मेरी प्रकृति जिस से यह संपूर्ण जगत् धारण किया जाता है, उस को जीव के रूप में रही हुई जान ॥ ५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।

**अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥**

सर्वाणि सम्पूर्णानि भूतानि स्थावरजङ्गमात्मकानि एते-पराऽपरे प्रकृति योनी कारणरूपे येषां तानि एतद्योनीनि कारणा भूतानि इत्युपधाय जानीहि अहमीश्वरः कृत्स्नस्य सम्पूर्णस्य जडाजडरूपस्य जगतः प्रभव उत्पत्तिकारणं तथा प्रलीयतेऽस्मिन्निति प्रलयः प्रलयस्थानम् अतस्ते उभेप्रकृती मत्तो नातिरिच्यते ॥ ६ ॥

इन दोनों प्रकृतियों को सारे प्राणियों का उत्पत्तिद्वार जान और मुझ को इन के द्वारा सारे जगत् की उत्पत्ति तथा नाश करने वाला जान ॥ ६ ॥

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥**

हे धनंजय ! हे अर्जुन ! मत्तः श्री भगवतः परमन्यत्कारणान्तरं किंचिदपि नास्ति नविद्यते सूत्रे तन्तौ प्रोतं मणिगणाइव मयि वासुदेवे इदं सर्वं जगत् प्रोतमनुस्यूतं ग्रथित मासीत् ॥७॥

हे धनंजय ! मुझ से अलग किंवा श्रेष्ठ ऐसी अन्य कोई भी वस्तु-स्थिति नहीं है, यह सारे प्राणी-पदार्थ सूत्र में पोई हुई मणियों

की भांति मेरे ही आधार से टिके हुये हैं ॥ ७ ॥

## रसोऽहमप्सु कौंतेय प्रभाऽस्मि शशि सूर्ययो ।
## प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥

हे कौन्तेय ! हे कुन्तीपुत्र ! अप्सु जलेषु अहमीश्वरः रसः मधुराम्लादिरूपंरसोऽस्मि तथा शशिसूर्ययोः सुर्यचन्द्रमसो रहं प्रभाऽस्मि कान्तिरस्मि सर्वेषु यजुरादिषुवेदेषु अहं प्रणव ओंकारोस्मि एवं खे अकाशे शब्दोस्मि नृषु जनेषु पौरुषं शौर्यधैर्यादि रूपञ्चास्मि ॥ ८ ॥

हे कौंतेय ।। जलों में रस मैं हूं, सूर्य चन्द्र में प्रकाश मैं हूं, वेदों में ओंकार मैं हूं, आकाश में शब्द मैं हूं और मनुष्यों में पराक्रम मैं हूं ॥ ८ ॥

## पुण्यो गंधः पृथिव्यां च तेजश्चास्मि विभावसौ ।
## जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥

पृथ्वीव्यां पुण्यः सुरभिः पवित्रश्च गन्धोऽस्मि विभावसौ अग्नौ तेजो दीप्तिश्चाऽस्मि सर्वभूतेषु प्राणिषु जीवनंचास्मि जीवन्ति सर्वाणि भूतानि येन तद्ध जीवनम् । तपस्विषु तापसेषु

तपश्चाऽस्मि ॥ ९ ॥

भूमि में रही हुई शुद्ध सुवास में हूं, अग्नि में तेज में हूं, सारे भूतों में जीवन ( चेतना ) में हूं और तपस्वियों में तप में हूं ॥ ९ ॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।**
**बुद्धि र्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०**

हे पार्थ हे राजन्, सर्वभूतां सर्वप्राणिनां सनातनं चिरंतनं बीजं प्ररोहकारणं मामीश्वरं विद्धि जानीहि बुद्धिमन्तां विवेकशक्ति शालीनां अहं बुद्धिः अन्तःकरस्य विवेकशक्ति रस्मि तेजस्विनां तेजोवतां अहं तेजोऽस्मि ॥ १० ॥

हे पार्थ सारे भूतों का सनातन बीज मुझ को ही जान बुद्धिवानों में बुद्धि और तेजस्वियों में तेज भी मैं ही हूं ॥ १० ॥

**बलं बलवतामस्मि कामरागविवर्जितम् ।**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥११॥**

अहमीश्वरः बलवतां शौर्यशालीनां कामस्तृष्णाअनुरागः विषयेषुमीति स्ताभ्यां वर्जितः रहितः बलं शौर्यञ्चास्मि तथा

हे भरतर्षभ ! हे भरतश्रेष्ठ ! भूतेषु प्राणिषु धर्मेण शास्त्रेण अविरुद्धःकामोऽस्मि ॥ ११ ॥

हे भारत श्रेष्ठ ! बलवानों में इच्छा तथा आसक्ति रहित सात्त्विक बल मैं हूं, और प्राणियों में धर्म से अविरुद्ध इच्छा भी मैं ही हूं ॥ ११ ॥

ये चैव सात्त्विका भावा राजसास्तामसाश्चये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥१२॥

ये चैव सात्विकाः सत्वनिर्वृत्ताः भावाः पदार्थाः ये च राजसा रजोगुणनिर्वृत्ता स्तामसा स्तमोगुणनिर्वृत्तारच भावा स्तान् समस्तान् मत्त एव जायमानान्नित्येवं विद्धि जानीहि तथापि न त्वहं तेषु तदधीनस्तद्वशो यथा ते संसारिणः पुनर्मयि एवाऽधीना भवन्ति ॥ १२ ॥

अन्य भी जगत् में जो जो सात्त्विक, राजस तथा तामस पदार्थ हैं, उन सब को मुझ से ही उत्पन्न हुये जान, वे सब मेरे ही वश में हैं, मैं उन के वश में नहीं ॥ १२ ॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् १३

एभिः पूर्वोक्तै स्त्रिभि- स्त्रिविध भावैः सत्वरजस्तमो गुण विकारैः रिक्तं सर्वं चराचरं मणिजातं जगच्छब्दवाच्यं मोहितं सन् एभ्यः पूर्वोक्तेभ्य गुणेभ्यः परं व्यतिरिक्तं अव्ययं जन्मादि सर्वभावविकारवर्जितं मामीश्वरं नाभिजानाति ॥ १३ ॥

इन नाशवान् त्रिगुणमय पदार्थों में ही यह सारा जगत् मोहित हो रहा है और इसी कारण वह उन सारे पदार्थों से परम श्रेष्ठ ऐसे मुझ अविनाशी को नहीं जान सकता ॥ १३ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥१४॥

हि यस्मादेषा यथोक्ता दैवी देवस्य ममेश्वरस्य सम्भूता गुणमयी सत्वरजतमोमयी मम श्रीकृष्ण माया दुरत्यया दुरतिक्रमा ये मामेवं सर्व भूतस्थं वासुदेवं प्रपद्यते विषयी कुर्वते ते एवैतां मायां तरन्ति ॥ १४ ॥

मेरी यह मोहादि में फंसाने वाली अद्भुत और त्रिगुणात्मक माया अत्यन्त दुस्तर होने से जो मनुष्य अनन्य भाव से मेरी शरण होते हैं, वेही इस माया को तैर सकते हैं ॥ १४ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यंते नराधमाः ।

**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥**

दुष्कृतिनः पापकारिणः नरेषु अधमाः निकृष्टाः मूढाः न मामीश्वरं प्रपद्यन्ते ते च मायया अपहृतज्ञानाः संमुषितज्ञाना आसुरं भावं हिंसादिक लक्षण माश्रिता आश्रयन्ते ॥ १५ ॥

इस माया से जिन का ज्ञान हरा गया है, ऐसे मूढ और दुराचारी नराधम आसुरी भाव में गिर कर मेरी शरण नहीं हो सकते ॥ १५ ॥

**चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥१६॥**

हे अर्जुन ! चतुर्विधा चतुष्प्रकाराः सुकृतिनः पुण्यकर्माणः जनाः मामीश्वरं भजन्ते सेवन्ते के च ते आर्तः व्याधिग्रस्तः जिज्ञासुः मां ज्ञातुमिच्छुः अर्थार्थिधनार्थी ज्ञानी च ज्ञानवांश्च ॥ १६ ॥

हे भरत श्रेष्ठ अर्जुन ! दुःखी, जिज्ञासु (ज्ञानेच्छु), धनेच्छु और ज्ञानी, ऐसे चार प्रकार के सदाचारी मनुष्य मुझ को भजते है ॥१६

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**

**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥१७**

तेषां चतुर्णां मध्ये ज्ञानी तत्त्वविद् नित्ययुक्तः मयिनित्य संलग्नं एकभक्तिर्भवति अतः स विशिष्यते विशेषमाधिक्य माप द्यते हि यतः ज्ञानिनः ज्ञानवतोऽहमीश्वरः प्रिय आसीत् सच भक्तः ममेश्वरस्य प्रियो भवति॥ १७ ॥

इन सब मे मेरी अनन्य भक्ति करने वाला नित्य युक्त ज्ञानी ही श्रेष्ठ है मैं उस ज्ञानी को अत्यन्त प्रिय हूं और वह मुझे अत्यन्त प्रिय है॥ १७॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्**

सर्व एवैते पूर्वोक्ता उदारा उत्कृष्टाः ममप्रिया भवन्ति ज्ञानी त्वात्मैव ममात्मास्वरूप एवेति मे मतं निश्चयः हि यस्मात् आस्थितः आरोढुं प्रवृत्तः स ज्ञानी अहमेवेश्वरोऽनान्योऽस्मीत्येवं युक्तात्मा समाधिस्थः सन् मामेव परं ब्रह्मैवानुत्तमामुत्कृष्टां गतिं याति॥ १८ ॥

यह चारों अच्छे हैं, परन्तु ज्ञानी को तो मैं अपना आत्मा ही मानता हूं क्योंकि वह मुझ को सर्वोत्तम गति और सर्वस्व मानकर मुझ में ही चित्त लगाये रहता है ॥ १८ ॥

**बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभ ॥१९॥**

किंच वासुदेवः सर्वमिति ज्ञानवान् यो बहूनां जन्मनामन्ते बहुजन्मावसाने मामीश्वरं प्रपद्यते सम्यग्दर्शनेन प्रत्यक्षी करोति स महात्मा ब्रह्मभूतः सुदुर्लभः ॥ १६ ॥

परन्तु ऐसा महात्मा अति दुर्लभ है, क्योंकि मनुष्य अनेक जन्मों के अन्त में हो "जो कुछ है सो सब वासुदेव ही है; अथवा वासुदेव ही अपना सर्वस्व है" ऐसा ज्ञान वाला हो कर मुझ को पा सकता है ॥ १६ ॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया २०**

तै स्तै पशुपुत्रादि विषयैः कामै रभिलाषैः हृतं ज्ञानं येषां ते हृतज्ञाना अपहृत विवेक विज्ञानाः देवताऽऽराधने यो योनियम स्ततं तं नियम मास्थाय आश्रित्य स्वया स्वकीयया प्रकृत्या स्वभा

येन नियताः प्रेरिता अन्य देवता इन्द्रादीन् प्रपद्यन्ते पूजयन्ति ॥

उन २ कामनाओं द्वारा जिन का ज्ञान ढका हुआ है, ऐसे अन्य मनुष्य अपनी अपनी प्रकृति के अनुसार उन २ नियमों का पालन करते हुये अन्य देवों को भजते हैं ॥ २० ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् २१

यो यो भक्तः यां यां तनूं देवतामूर्तिं पाषाणादिनिर्मितां श्रद्धया स्वकाम सिद्धयर्थं शुद्धान्तःकरणेन अर्चितुं मिच्छति तस्य तस्य भक्तस्य तामेवा चलां स्थिरां श्रद्धामहं श्रीकृष्णोविदधामि स्थिरी करोमि ॥ २१ ॥

जो जो मनुष्य जिस जिस देव के स्वरूप को श्रद्धा से आराधन करना चाहता है, उस उस की श्रद्धा उस उस देव में मैं स्थिर करता हूं ॥ २१ ॥

स तयाश्रद्धया युक्तस्तस्याराधनमीहते।
लभते च ततः कामान्मयैव विहितान्हि तान् २२

ततश्च स तया भक्तया श्रद्धया युक्तः सन् तस्या मूर्ते राराधनं समाधानं वशीकरण मीहते चेष्टते ततः श्रद्धातः स्वेशु

द्धान्तः करणतः मयैव विहितान् आज्ञापितान् हितान् ईप्सितान् कामान् विषयान् लभते प्राप्नोति ॥ २२ ॥

उस श्रद्धा से युक्त हो कर वह उस देवता का आराधन करता और उस देवता से उन मेरे ही विधान किये हुये भोगों को पाता है ॥ २२ ॥

**अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यांति मद्भक्ता यांति मामपि ॥२३**

तेषा मल्पमेधसामल्प प्रज्ञानां तत्फलन्तुअन्तेव विनाशी भवति देवान्यजन्तीति देवयजः देवपूजकाः देवान् इन्द्रादीन् यान्ति मद्भक्ताः मामेव यान्ति प्राप्नुवन्ति ॥ २३ ॥

परन्तु उन अल्प बुद्धिवालों को मिलने वाला वह फल नाशवान् ही होता है देवों के पूजक उन नाशवान् देवों को ही प्राप्त होते हैं और मेरे भक्त तो मुझ अविनाशी को प्राप्त होते हैं ॥ २३ ॥

**अव्यक्तं व्यक्तिमापन्नं मन्यंते मामबुद्धयः ।**
**परं भावमजानंतो ममाव्ययमनुत्तमम् ॥२४॥**

ममेश्वरस्य अव्ययं व्ययरहितं मनुत्तमं सर्वोत्कृष्टं परं निरतिशयं भावं परमात्वस्वरूप मजानंतोऽज्ञातवन्त अबुद्धयो

ऽविवेकिनः मामव्यक्तं निराकारं व्यक्तिमापन्नं मूर्त्तिमन्तं मन्यन्ते जानन्ति ॥ २४ ॥

अविवेकी मनुष्य मेरे अक्षय, सर्वोत्तम तथा परम शुद्ध स्वरूप को न जानने से ही मुझ अव्यक्त को व्यक्त ( प्रकट ) हुआ मानते हैं ॥ २४ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥

सर्वस्य लोकस्याऽहं न प्रकाशोऽस्मि दृष्टिगोचरे न भवामि कुतो योगस्य योगाख्यस्य मायया मम मायया समावृत आच्छादितोयं मूढोलोकः अव्ययं अविनाशिनं अजं जन्मरहितं मां नाऽभि जानन्ति न बुध्यन्ते ॥ २५ ॥

योग माया से ढका हुआ मैं सब को प्रत्यक्ष नहीं होता, इस लिये ये मूढ लोग मुझ जन्ममरण रहित परमात्मा को नहीं जान सकते ॥ २५ ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन॥२६॥

हे अर्जुन ! समतीतानि अतिक्रान्तानि वर्तमानानि भविष्या

णि च भूतानि अहमीश्वरो वेद जानामि मामीश्वरन्तु कश्चनः काऽपि जनो न वेद न जानाति ॥ २६ ॥

हे अर्जुन, मैं भूत काल के, वर्त्तमान के और भविष्य के सारे प्राणी पदार्थों को जानता हूं परन्तु मुझ को कोई भी नहीं जानता ॥२६॥

**इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।**
**सर्वभूतानि संमोहं सर्गे यांति परंतप ॥२७॥**

हे परंतप ! सर्गे सृष्टावुपत्यनन्तरं इच्छा द्वेषाभ्या माभिलापवैराभ्यां समुत्थेन उत्पन्नेन द्वन्द्वमोहेन सुख दुःखादिरूपेण हे भारत ! हे भरतान्वय सर्वभूतानि प्राणि समूहानि समोह मविवेकं यान्ति मामुवन्ति ॥ २७ ॥

क्योंकि हे परन्तप भारत, इच्छा और द्वेष से उत्पन्न होने वाले द्वंद्व के मोह से सारे प्राणी जन्म से ही अविवेक को प्राप्त हो रहे हैं ॥ २७ ॥

**येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः॥ २८॥**

पुनः येषां पुण्य कर्मणां पुण्यकारिणां जनानां पापंकिल्विष मन्तंगतं विनष्ट मीसीत् ते पुण्यकर्माणो द्वन्द्वमोहाभ्यां सुखदुःखा

दिरूपाभ्यां विनिर्मुक्ता रहिता दृढव्रताः दृढसंकल्पाः मा जगन्नियन्तारं भजन्ते सेवन्ते ॥ २८॥

पुण्य कर्मों से जिन के पाप नष्ट हुये हैं वे ही इन द्वंद्वों के मोह से छूट दृढव्रत वाले हो कर मुझ को भज सकते हैं ॥ २८ ॥

जरामरणमोक्षाय मामाश्रित्य यतंति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥

ये पुण्यकर्माणोजनाः मामीश्वर माश्रित्य मयि समाहितचेतसो भूत्वा जरामरणयोः मोक्षाय व्याधिमृत्युविनाशाय यतन्ति यत्नं कुर्वन्ति ते तत् सर्व वेदान्त प्रसिद्धं ब्रह्म विदुः जानन्ति सम्पूर्ण मध्यात्म मात्मविषयं जानन्ति अखिलं समस्तं कर्म अग्निहोत्रादिकञ्च जानन्ति ॥ २९ ॥

बुढापा और मृत्यु से छूटने के लिये जो इस प्रकार मेरा आश्रय ले कर यत्न करते हैं, वे अवश्य उस अविनाशी परब्रह्म को, समग्र अध्यात्म का और सारे कर्मों को जान सकते हैं ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥

पूयाणकाले अन्तकालेच सः कथं केन पूकारेण ज्ञेयोसि ॥ २॥

हे मधुसूदन, यहां अधियज्ञ कौन है, इस देह में वह कैसे है, और युक्त चित्त वाले पुरुषों को अन्त समय में आप कैसे जानने योग्य हैं? ॥ २ ॥

श्रीभगवानुवाच ॥

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥

परमं पूकृति विनिर्मुक्तात्मस्वरूपं अक्षरं अविनश्वरं ब्रह्म ब्रह्मपदवाच्यत्वावच्छिन्नं उच्यते पूतिपाद्यते देहे योजीवरूपेणो त्पद्यते सः स्वभावः अध्यात्मं अध्यात्म पद वाच्यत्वावच्छिन्न मभिधीयते भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतभावस्तूत्पत्तिकरो विसर्जनं देवतो देशे न घृतादिद्रव्यस्य परित्यागः स एव विसर्ग लक्षणो यज्ञः कर्मसंज्ञितः कर्मपदवाच्यत्वावच्छिन्नं प्रतिपाद्यते ॥ ३ ॥

जो सब से पर ( श्रेष्ठ ) और अविनाशी है, वह "परब्रह्म" है, उस ब्रह्म के ही भाव रूप जीवात्मा को 'अध्यात्म' कहते हैं और भूतों के भावों को उत्पन्न करने वाले विसर्ग ( त्याग ) का नाम "कर्म" है ॥ ३॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम्।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥

क्षरतीति क्षरो विनाशी भावो यत्किंचिदुत्पत्तिमद्वस्तु जातं तदधिभूतं अधिभूतपदवाच्यत्वावच्छिन्न मुच्यते कुतः प्राणि जातमधिकृत्य भवतीति व्युत्पत्तेः। पूर्णमनेन सर्वं जगदिति पुरुषः सर्वप्राणिना मनुग्राहकः हिरण्यगर्भरूपः अधिदैवं अधिदैव त्वावच्छिन्नं प्रतिपाद्यते हे देहभृतांवर। हे जनश्रेष्ठ! अत्रास्मिन् देहे अधियज्ञः यज्ञफलार्पकः अहमीश्वरएव ॥ ४ ॥

इस देह में जो नाशवान् पदार्थ है सो "अधिभूत" है, पुरुष (जीव) "अधिर्दैवत" है, और हे पुरुषश्रेष्ठ, जो 'अधियज्ञ' है सो मैं ही हूं ॥ ४ ॥

अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः

अन्तकाले च देहाऽवसाने च मां जगन्नियामकं स्मरन् ध्यायन् यो जनः कलेवरं मुक्त्वा अपहाय प्रयाति गच्छति स मद्भावं चिदानन्दैकस्वरूपं याति नाऽत्रविषये संशयः कार्यो विश्वासतव्यः ॥ ५ ॥

अन्तकाल में जो पुरुष मेरा स्मरण करता हुआ देह को छोड़ जाता है, वह मेरे स्वरूप को प्राप्त होता है इस में संशय नहीं ॥ ५ ॥

यं यं वापि स्मरन्भावं त्यजत्यंते कलेवरम् ।
तं तमेवैति कौंतेय सदा तद्भावभावितः ॥ ६ ॥

वाऽपि अथवा निश्चयेन यं यं भावं देवता विशेषं स्मरं श्चिन्तयन् कलेवरं शरीरं त्यजति परित्यजन्ते सदा सर्वदा तस्मि न्भावस्तद्भावः स भावितोऽभ्यस्तो येन स तद्भावभावितः तं तं भावं देवतारूपं भूतादि रूपं वा स्मर्यमाणः सन् तं तमेव भूतादि देवादियोनिविशेषं एति प्राप्नोति ॥ ६ ॥

किंवा हे कौंतेय ! पुरुष अन्त काल में जिस जिस भी पदार्थ का स्मरण करता हुआ देह को छोड़ता है, वह सर्वकाल उसी उसी को भावना वाला होने से उसी उसी पदार्थ को प्राप्त होता है ॥ ६ ॥

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥७॥

यस्मादेवं तस्मात्सर्वेषु कालेषु मां जगन्नियामकं स्मरन् चिन्तयन् सन् युद्धं कुरु मयि जगदाधारे अर्पिते समर्पिते मनोबुद्धीर्येन एवं भूतः सन् असंशयं सन्देह रहितं मामीश्वर

मेव एष्यति प्राप्स्यसि ॥ ७॥

इस लिये सर्वकाल में तू मेरा स्मरण कर और युद्ध कर, मेरे में मन बुद्धि अर्पण करने वाला हो कर तू निश्चय मुझे ही प्राप्त होगा ॥ ७ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना
परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥८॥

हे पार्थ ! हे अर्जुन ! नान्यत्र विषयान्तरे गन्तुं शीलमस्येति नान्यगामि तेन विषयान्तराराहित्येन अभ्यासयोगयुक्तेन ध्येये वस्तुनि चित्तस्य स्थिरी करणार्थो यत्नोऽभ्यासः स एव योग स्तस्मिन् युक्तेन संलग्नेन चेतसा परमं सर्वोत्कृष्टं दिव्यं द्योतमानं पुरुषं अनुचिन्तयन् अनुध्यायन् अहमेव वासुदेव इति ध्यायन् तमेव जगदाधारं प्रयाति ॥ ८ ॥

क्योंकि हे पार्थ ! अन्यत्र न जाने वाले तथा अभ्यास योग में लगे हुये चित्त करके सदा परमात्मा का चिन्तन करने वाला मनुष्य उस परम दिव्य पुरुष को ही प्राप्त होता है॥ ८ ॥

कविं पुराणमनुशासितार ।
मणोरणीयांसमनुस्मरेद्यः ॥

सर्वस्य धातारमचिंत्यरूप ।
मादित्य वर्णंतमसः परस्तात् ॥९॥

कविं सर्वज्ञं पुराणं पुरातनं अनुशासितारं विश्वस्य प्रशासितारं अणोः सूक्ष्मादपि अणीयांसं सूक्ष्मतरं सर्वस्य जगतः धातारं धारणपोषणकर्तार मचिन्त्य रूपमपरिमेयमहिमान मादित्यवर्णं सर्वप्रकाशक नमसः परस्तात् अज्ञान मोहान्धकारात्परं अनुचिन्तयन् तमेवैति प्राप्नोति ॥ ९ ॥

जो मनुष्य जीवन काल में उस सर्वज्ञ, अनादि, सर्व नियन्ता अणु से भी सूक्ष्म, सर्व आधार, अचिंत्य स्वरूप, सूर्य को भी प्रकाश देने वाला तथा तामस से अलग, ऐसे परम पुरुष का स्मरण किया करता है, ॥९

प्रयाणकाले मनसाऽचलेन ।
भक्त्या युक्तो योगबलेन चैव ॥
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् ।
स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

प्रयाणकाले अन्तकाले अचलेन निश्चलेन मनसा योगस्य बलं योगबलं तेन योगबलेन भ्रुवोर्मध्ये प्राणं प्राणवायु मावेश्य

सम्यक् स्थापयित्वा भजनं भक्तिस्तया युक्तः संयुक्तः तं दिव्यं सर्व प्रकाशं परं पुरुषं हिरण्यगर्भाख्यं नारायणादि शब्दमति पाद्य मुतैति ॥ १० ॥

यह प्रयाण काल में भी पूर्व के योगाभ्यास के बल करके अचल मन से भक्तियुक्त होता हुआ प्राण को भौंओं के बीच में स्थापित कर उस परम दिव्य पुरुष को प्राप्त होता है ॥१०॥

यदक्षरं वेदविदो वदंति ।
विशंति यद्यतयोवीतरागाः ॥
यदिच्छंतो ब्रह्मचर्यं चरंति ।
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

वेदं विदन्तीति वेदविदः वेदान्तज्ञाः यदक्षरं अविनाशिनं वदन्ति कथयन्ति यत् यस्मिन् वीतरागाः विरागिणो यतयः सर्व त्यागादि प्रयत्नवन्तो विशन्ति यत्रैक्यं प्राप्नुवन्ति यदिच्छन्तो यत्स्वरूपज्ञानेन प्राप्तीच्छवः ब्रह्मचर्य मिन्द्रियनिग्रहं रेवाड़ी रामपुरा निकटवर्ति भगवद्भक्तचाऽश्रमे चरन्ति कुर्वन्ति तत्प्रवत्प्राप्यं पदं मोक्षाख्यं ते तुभ्यं संग्रहेण संक्षेपेण ज्ञानार्थं प्रवक्ष्ये कथयिष्यामि ॥ ११ ॥

वेदवेत्ता जिस पदको अविनाशी कहते हैं, वीतराग यति जिस में प्रवेश करते हैं, और जिस की इच्छा वाले ब्रह्मचर्य का पालन करते हैं, उस को अब तुझे मैं संक्षेप से कहता हूं ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुद्ध्य च ।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्**

सर्वाणि शब्दादिविषयग्रहणद्वाराणीन्द्रियाणि संयम्य निगृह्य तथा हृदि हृदयकमले मनोऽपिनिरुद्ध्य संयम्य निश्चलमापाद्य आत्मनः स्वस्य प्राणं प्राणवायुं मूर्ध्नि भ्रुवोर्मध्ये आधाय निवेश्य योग धारणं योगशास्त्रोक्तां धारणां मनसो देशविशेष निवन्धनी मास्थितोऽनुतिष्ठन् सन् वक्ष्यमाणां गतिं याति ॥ १२ ॥

जो पुरुष सर्व इन्द्रिय द्वारों को रोक मन को हृदय में स्थिर करके तथा अपने प्राण को मस्तक में स्थापित कर योग धारणा में स्थित होकरके ॥ १२ ॥

**ॐमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् १३**

ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूत मोंकारं व्याहरन् उच्चारयन् माञ्च ब्रह्मभूतं स्मरन् अनुचिन्तयन् यो जनः देहं

शरीरं त्यजन् म्रियमाणः सन् प्रयाति प्राणवियोगंविधत्ते सः परमां प्रकृष्टां गतिं मोक्षं याति प्राप्नोति ॥ १३ ॥

'ॐ' इस ब्रह्म वाचक एकाक्षर मंत्र से मेरा स्मरण करता हुआ देह को छोड़ जाता है वह अवश्य परमगति को प्राप्त होता है।

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४

हे पार्थ ! हे राजन् ! नास्ति अन्यत्र चेतो यस्याऽसौ अनन्यचेताः यो जनः मामीश्वरं सततं नैरन्तर्येण नित्यशः दीर्घकालं स्मरति तस्य नित्ययुक्तस्य नित्योपायवतः योगिनः परिपूर्णयोगस्याहं सुलभः सुखेन लभ्यः ॥ १४ ॥

हे पार्थ ! जो अनन्य चित्तवाला पुरुष जीवन कालमें नित्य निरंतर मुझ परमात्माका स्मरण करता है, उस नित्ययुक्त योगी को अन्त काल में भी मैं सुलभ हूं ॥ १४ ॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥१५॥

महात्मानः' महामनसो, योगेन जितचित्ताः भक्ताः परमां

प्रकृष्टां संसिद्धिं मोक्षाख्यां गताः प्राप्ताः सन्तो मामीश्वरमुपेत्य मद्भावमापन्नश्च दुःखादीनां आध्यात्मिकादीनां आलीयन्ते यस्मिन्नि त्यालयमाश्रयं अशाश्वतं नश्वरं तुच्छं जन्मः पुन र्नाप्नुवन्ति न माप्नुवन्ति ॥ १५ ॥

इस प्रकार मुझको प्राप्त होकर परम सिद्धिको पाये हुए महात्मा लोग फिर दुःखस्थानरूप और अनित्य ऐसे पुनर्जन्मको नहीं पाते ॥ १५ ॥

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥१६॥

हे अर्जुन! भवन्ति भूतानि यस्मिन्निति भुवनं ब्रह्मणः भुवनं ब्रह्मभुवनं ब्रह्मभुवनं आ इति आब्रह्मभुवनात् ब्रह्मभुवनमभिव्याप्य ब्रह्माण्डोदरवर्तिनः सर्वेलोकाः पुनरावर्तिनः पुनर्जन्मभाजो भवन्ति हे कौन्तेय मामीश्वरं उपेत्य पुनर्जन्म पुनरुत्पत्ति र्नविद्यते ॥ १६ ॥

हे अर्जुन ब्रह्मलोक पर्यन्त जितने लोक हैं वे सारे उत्पत्ति तथा नाशवाले हैं हे कौंतेय, एक मुझको ही पाकर पुनर्जन्म नहीं होता ॥ १६ ॥

सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः ।

रात्रियुगसहस्त्रां तां तेऽहोरात्रविदो जनाः ॥१७॥

चतुर्युगसहस्रं पर्यन्तोऽवसानं यस्य तत्सहस्रयगपर्यन्तं ब्रह्मणो यदहर्दिनं तद्ये विदु र्जानन्ति युगसहस्रान्तां चतुर्युग सहस्रं अन्तोऽवसानं यस्यास्तादृशीं रात्रिं चये विदु र्जानन्ति ते अहो रात्रविदः कालसंख्या विदोजनाः भवन्ति ॥ १७ ॥

जो रात्री और दिनको जाननेवाले पुरुष हैं, उनको ज्ञात है कि ब्रह्माका एक दिन हजार महायुग पर्यंतक होता है और उनकी रात्री भी हजार महायुगकी अवधिवाली होती है, ॥१७॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवंत्यहरागमे ।
रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥१८॥

अव्यक्तात् स्वापावस्थापन्नाद्ब्रह्मणः सकाशात् सर्वा व्यक्तयः स्थावरजङ्गमादयः देवादि कीट तृणादयश्च अहरागमे ब्रह्मदिनोद्गमे प्रभवन्ति उत्पद्यन्ते तथा रात्र्यागमे रात्र्युद्गमे तत्रैवाऽव्यक्तसंज्ञके स्वप्नावस्थापन्ने ब्रह्मणि प्रलीयन्ते लीनाः भवन्ति ॥ १८ ॥

ब्रह्माका दिन आनेही अव्यक्त प्रकृतितत्वसे सारी व्यक्तियां प्रकट होती हैं और रात्रि आनेपर वे उसी अव्यक्त में लीन

होती है, ॥ १८॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

हे पार्थ ! हे राजन् स एव पूर्वोक्त एवायं दृश्यमानो भूतानां ग्रामः भूतग्रामः चराचरसमुदायो भूत्वा भूत्वा उत्पद्यो त्पद्य रात्र्यागमे दिवसावसाने अवशः परवशः सन् प्रलीयते प्रलीनं भवति तथैव अहरागमे दिनोद्गमेऽवशः परवशः एव प्रभवति उत्पद्यते ॥ १६ ॥

इस प्रकार हे पार्थ, यह वही भूतसमुदाय उत्पन्न हो हो कर रात्रि आने पर अव्यक्त में लीन होता हैं, और दिन आनेपर अपने अपने कर्म के वशमें हुआ प्रकट होता है ॥ १६ ॥

परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति॥२०॥

तस्मात्पूर्वोक्तात् अव्यक्तात् भूतग्रामबीजभूतात् यः सनात नश्चिरंतनो भावः शुद्धचैतन्यभावः अव्यक्तोऽनिन्द्रियगोचरः सः परोव्यतिरिक्तो भिन्नः अन्यः विलक्षणश्च भवति यः सर्वेषु

भूतेषु प्राणिषु नश्यत्सु न विनश्यति न विकार माप्नोति ॥ २० ॥

परंतु उस अव्यक्तसेभी अत्यंत अव्यक्त (सूक्ष्म)अन्य जो परम सनातन भाव ( परमात्मा ) है; सो सारे भूत नष्ट होने पर भी नष्ट नही होता ॥ २०॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तंते तद्धाम परमं मम॥२१॥

योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाऽक्षरसंज्ञकमव्यक्तं भाव शुद्धचैतन्यं भावं तमेव वेदविदः परमां प्रकृष्टां परस्य अनुमेयां गति माहुः कथयन्ति यमक्षरं अविनाशिनं भावं चैतन्य स्वरूपं प्राप्य गत्वा भूयः न निवर्तन्ते पुनर्जन्मानो न भवन्ति तदक्षरात्मकं ममेश्वरस्य परम मुत्कृष्टं धाम गृहं जायते ॥ २१ ॥

उस परम अव्यक्त परमात्माकोही अक्षर कहा है और परम गतिभी उसीको कहते हैं, जिसको पाकर फिर जन्म नहीं होता ऐसा मेरा परम धाम भी वही है ॥२१॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यांतःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२

हे पार्थ ! हे राजन् ! यस्येश्वरस्य भूतानि कार्य्य भूतानि

स्थावरजंगमादीनि अन्तःस्थानि मध्यगतानि सन्ति येन च जगन्नियंत्रा इदं सर्वं चराचरं जगत् आकाशे घटादिवत् ततं व्याप्तं सः परः प्रधानः पुरुषः अनन्यया आत्मविषयत्वेन आनसैकाग्ररूपयाभक्त्या लभ्यो भवति ॥ २२ ॥

हे पार्थ, ये सारे भूत जिसके अंतर्गत हैं और जिससे यह सारा जगत् भर पूर है, वह परमपुरुष भक्ति सेही प्राप्त होता है ॥२२

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।**
**प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३॥**

हे भरतर्षभ ! हे भरतश्रेष्ठ ! यत्र यस्मिन् काले समये प्रयाता मृता योगिनः अनावृत्तिं अपुनरावृत्तिं यान्ति प्राप्नुवन्ति पुनश्च यस्मिन्कालेमृता आवृत्तिं पुनरागमनं यान्ति प्राप्नुवन्ति तं कालं वक्ष्यामि कथयिष्यामि ॥ २३ ॥

हे भारत श्रेष्ठ जिस कालमें देह छोड़ जानेवाले योगीजन अनावृत्तिको और जिस कालमें जानेवाले आवृत्तिको (पुनर्जन्मको) प्राप्त होते हैं, उस कालके विषयमें अब तुझे कहता हूं ॥२३॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।**
**तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥ २४**

अग्निः अग्न्यधिष्ठातृदेवता ज्योतिः प्रकाशाख्यलपदेवता अहः दिवसाधिष्ठातृदेवता शुक्लः शुक्लपक्षः षण्मासा उत्तरायणं उत्तरायणस्यषण्मासाः तत्र तस्मिन्काले प्रयाताः मृताः ब्रह्मविदः ब्रह्मज्ञातारः क्रमेण ब्रह्म परमानन्दैक स्वरूपं गच्छन्ति ॥ २४ ॥

अग्नि, ज्योति, दिन शुक्लपक्ष, और उत्तरायणके छः मास, इन समयोंमें प्रयाण करनेवाले ब्रह्मज्ञानी (ब्रह्मके परोक्ष ज्ञानवाले) वापस न आकर क्रमसे ब्रह्मको प्राप्त होते हैं ॥२४॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्**
**तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५॥**

धूम स्तापरूपाग्न्यात्मकप्रतिबन्धकः रात्रि निशा कृष्णः कृष्णपक्षः एवं षण्मासा दक्षिणायनं तत्र सकामो योगी प्रयातः सन् मृतः सन् चान्द्रमसं स्वर्गादिसुखं शीतलात्मक मनोरमभोगं प्राप्य सुखभोगंकृत्वा निवर्तते पुनर्जन्म प्राप्नोति ॥ २५ ॥

धूम, रात्रि कृष्णपक्ष, दक्षिणायनके छः मास, इन समयोंमें प्रयाण करनेवाले योगी (कर्मठ) चन्द्रमाकी ज्योतिको प्राप्त होकर लौट आते हैं ॥ २५ ॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**

एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः॥२६॥

इतिनिश्चयेन शुक्लाच कृष्णा च शुक्लकृष्णे पूर्वोक्ता शुक्ला इतरा कृष्णा एते शाश्वते नित्ये जगतः संसारस्य गती गमनमार्गौ मते अभिमते तत्रैकया शुक्लया अनावृत्ति अपुन रावृत्ति याति प्राप्नोति अन्यथा इतरया कृष्णया पुनः भूय आव र्तते पुनर्जन्म प्राप्नोति॥ २६॥

शुक्ल और कृष्ण (देवयान और पितृयान) के भेद से जगत् की यह दो गतियां शाश्वत मानी गई हैं, जिसमे एक गती से जाने वालों को फिर इस संसार में आना नहीं पड़ता और दूसरी गतीसे जानेवालों को आना पड़ता है॥२६॥

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥२७

हे पार्थ! हे राजन्! एते पूर्वोक्ते जन्म मोक्षरूपे सृती मार्गौ जानन्नपि बुद्ध्यमानोऽपि कश्च कोऽपि योगिजनो न मुह्यति मोहं गच्छति तस्मात्सर्वेषु कालेषु हे अर्जुन! योगेनयुक्तः योग युक्तः योगाभ्यासतत्परोभव॥ २७॥

परन्तु हे पार्थ, इन मार्गों को तत्त्व से जानता हुवा कोई भी

योगी मोहित नहीं होता, इस कारण हे अर्जुन, तू सर्वकाल में योगयुक्त हो ॥ ७२ ॥

वेदेषु यज्ञेषु तपःसु चैव ।
दानेषु यत्पुण्यफलं प्रदिष्टम् ॥
अत्येति तत्सर्वमिदं विदित्वा ।
योगी परं स्थानमुपैति चाद्यम् ॥२८॥

सम्यगधीतेषु वेदेषु यज्ञेषु यज्ञानुष्ठानादिषु तपःसु तपश्च रणेषु दानेषु ब्राह्मणेभ्यः सम्यग् दत्तेषु दानेषु च यत्पुण्यफलं पुण्य महात्म्यं प्रदिष्टं उक्तमितियावत् योगी इदं सर्वं समस्ता ध्याय कथितं फलं विदित्वा ज्ञात्वा अत्येति अतिक्रामति आद्यं आदौभवं परं प्रकृष्टं स्थानं मोक्षाख्यं उपैति प्राप्नोति च ॥२८॥

ऐसा योगीवेदों में, यज्ञमें,तपोंमें और दानोंमें पुण्यका जो लौकिक पारलौकिक फल कहा हुआ है, उन सब का तुच्छ मान कर लाघ जाता है और परमश्रेष्ठ सनातन स्थानको प्राप्त होता है ॥२८

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अक्षरब्रह्मयोगो नामाष्ट मोऽध्यायः ॥८॥

# नवमोऽध्यायः ।

श्रीभगवान् उवाच ॥

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ।**

इदं गुह्यतम मत्यन्त्यगुप्तं विज्ञानसहितं उपासना गति विशेष ज्ञान सहितं भक्तिरूपमुपासनाख्यं ज्ञानं अनसूयवे गुणेषु दोषाविष्करणरहिताय ते तुभ्य मर्जुनाय प्रवक्ष्यामि कथयिष्यामि यज्ज्ञानं ज्ञात्वा बुद्ध्वा अशुभात् अशुभरूपात् संसार बन्धनरूपात् मोक्ष्यसे मुक्तो भविष्यसि ॥ १ ॥

तू इर्षारहित है इसी से अब मैं तुझे अत्यंत गुह्य ज्ञानको विज्ञान सहित कहता हूं, जिसको जानकर तू अशुभ संसार में आने से छूटेगा॥ १ ॥

**राज विद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**

प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥

इद मुच्यमानं ज्ञानं विद्यानांराजा इति राजविद्या सर्वासांविद्यानां नृपः गुह्यानां गोप्यानाञ्चराजा इति राजगुह्यं गोप्येषु श्रेष्ठं पवित्रं पावनं उत्तमं सर्वोत्कृष्टं प्रत्यक्षेण अवगमो यस्य तत् प्रत्यक्षावगमं शाक्षात्फलार्पकं धर्म्यं धर्मादनपेतं धर्मोत्पादकं सुकमुखं तु सुखेन अनायासेन कर्तुं योग्यं अव्ययं अनन्तफलकं चेति ॥ २ ॥

यह ज्ञान सारी विद्याओं में श्रेष्ठ, सर्व गुह्यों में गुह्य, पवित्र, उत्तम, प्रत्यक्ष फलवाला, धर्म युक्त, आचरनेमे सुखकारक और अव्यय है ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तंते मृत्युसंसारवर्त्मनि ॥३॥

परान् शत्रून् तापयतीति परंतप स्तत्सम्बुद्धौ हे परंतप ! अस्य धर्मस्य अश्रद्दधानाः श्रद्धाऽभाववन्तः पुरुषाः मानवाः मामीश्वरं अप्राप्य मृत्यु युक्तः संसारो मृत्युसंसार स्तस्यवर्त्म तस्मिन्मृत्यु युक्ते संसारमार्गे निवर्तन्ते परिभ्रमन्ति ॥ ३ ॥

हे परंतप, इस ज्ञानरूपी धर्म श्रद्धा न रखनेवाले पुरुषही मुझ को न प्राप्त होकर इस मृत्युयुक्त संसार के मार्गमें लौट आते हैं ॥३॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्व भूतानि न चाहं तेष्ववस्थितः ॥४**

अव्यक्ता अप्रकटीभूता मूर्तिर्यस्य तेन अव्यक्तमूर्तिना मया इदं परिदृश्यमानं सर्वं जगत् ततं व्याप्तं सर्वभूतानि ब्रह्मादि स्तम्बपर्यन्तानिभूतानि मत्स्थानि मय्येव विराजमानानि अहं च्चेश्वरः तेषु भूतेषु नावस्थितोऽस्मि ॥ ॥४॥

मुझ अव्यक्त परमात्मा करके यह सारा व्यक्त जगत् भरपूर है परन्तु सारे भूत मेरेमें अंतर्गत हैं मैं उन भूतोंके अंतर्गत नहीं हूं।४

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।**
**भूतभृन्नच भूतस्थो ममात्मा भूतभावनः॥५॥**

भूतानि स्थावरजंगमादीनि मत्स्थानि मयि स्थितिमन्ति न भवन्ति न चाहंभूतस्थः प्राणिस्थोस्मि इति मे मम योगमैश्वरं योगबलं योगवैचित्र्यञ्च पश्य अवलोकय तथापि ममेश्वरस्यात्मा भूतान् बिभर्तीति भूतभृत् भूताऽऽधारकः भूतभावनः भूतानां

वृद्धि करश्चासीत् ॥ ५ ॥

और यह सारे भूत मेरे मे नहीं भी हैं! मेरा योगैश्वर्य तो देख कि भूतों को उत्पन्न करनेवाला और धारण करनेवाला होने परभी मेरा आत्मा भूतोंमें स्थित नहीं है ॥ ५ ॥

यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६

यथाऽऽकाशेऽनावलम्बे स्थितो महान्वायुः नित्यं सर्वत्र गच्छतीति सर्वत्रगो भवति तथा सर्वाणि भूतानि मत्स्थानि मयिस्थितिमन्ति भवन्ति इत्युपधारय जानीहि ॥ ६ ॥

जैसे सर्वत्र गतिवाला महान् वायु सदा आकाशमें स्थित है, परन्तु आकाश उस वायु में स्थित नहीं है, वैसे यह सारे भूत मेरे में स्थित हैं, परन्तु मैं उन भूतों में स्थित नहीं हूं, ऐसा निश्चय कर ॥ ६ ॥

सर्वभूतानि कौंतेय प्रकृतिं यांति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥

हे कौंतेय हे कुन्तीपुत्र ! कल्पक्षये प्रलयकाले सर्वभूतानि

ब्रह्मादिस्तम्बपर्यन्तानि मामिकां मदीयां त्रिगुणात्मिकां निकृष्टां प्रकृतिं यान्ति प्रविशन्ति पुनस्तथैव तानि भूतानि कल्पादा वहं विविधरूपेण सृजामि ॥ ७॥

हे कौंतय! कल्पके अंतमे संपूर्ण भूत मेरी प्रकृति में आ मिलते हैं और कल्पके आरम्भमें मैं फिर उनको उत्पन्न करता हूं ॥ ७॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥**

अहं स्वां स्वकीयां प्रकृतिं अवष्टभ्य वशीकृत्य प्रकृतेर्वशात् स्वभाववशात् अवशं अस्वतन्त्रं अविद्यादिदोषैः परवशीकृत मिमं कृत्स्नं भूतग्रामं प्राणिसमुदायं पुनः पुनः विसृजामि विविध प्रकारेण निर्मिमे ॥ ८ ॥

इस अविद्या के वश और पराधीन समग्र भूतसमुदायको मैं इस प्रकार अपनी प्रकृतिके आश्रयसे बारंबार उत्पन्न करता हूं ॥८॥

**न च मां तानि कर्माणि निबध्नंति धनंजय ।**
**उदासीनवदासीन मसक्तं तेषु कर्मसु ॥९॥**

हे धनञ्जय हे लौकिकपरवशीकवित्त ! तानि विषमसृष्टि-रूपाणि कर्माणि उदासीनवत् उपेक्षक इव आसीनं स्थितिमन्तं तथा तेषु जगदुत्पत्त्यादिकर्मसु कर्तव्येषु असक्तं फलाऽऽसक्ति रहितं मामीश्वरं न निबध्नन्ति न वशी कुर्वन्ति ॥ ६ ॥

परन्तु हे धनंजय, यह उत्पत्तिनाशके कर्म में अनासक्त और उदासीनकी तरह करता हूं, इसलिये वे कर्म मुझे बंधन नहीं करते ॥ ६ ॥

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौंतेय जगद्विपरिवर्तते ॥१०॥

हे कौंतेय हे कुन्ती पुत्र:! एषा त्रिगुणात्मिका प्रकृतिः माया मया कूटस्थेन अध्यक्षेण प्रवर्तकेन चराचरेणसहित मिति सचराचरं जगत् सूयते उत्पादयति अनेन अध्यक्षत्वेनैव हेतुना जगत् स्थावरजंगमात्मकः विपरिवर्तते जन्माद्यवस्थासु परि-भ्रमति ॥ १० ॥

हे कौंतय, मुझ अधिष्ठानके आश्रयसे ही प्रकृति सचराचर जगत् की उत्पत्ति तथा लय किया करती है और मेरा इस अध्य

क्षताके कारणही यह सारा जगत् प्रवृत्त होता है॥ १०

**अवजानंति मां मूढा मानुषीं तनुमाश्रितम् ।**
**परं भावमजानंतो मम भूतमहेश्वरम् ॥११॥**

मानुषीं मनुष्यसंवधिनीं तनुं देहं आश्रित्य, परं प्रकृष्टं भावं परमात्मतत्वं तथा मम भूत महेश्वरं भूतानां महान्त मीश्वरम् अजानन्तो मूढा अविवेकिनः मां अवजानन्ति अवज्ञां कुर्वन्ति ।११

मेरे उस परमश्रेष्ठ सर्व भूतोंके महेश्वर स्वरूपको न जानने वाले अज्ञानी लोगही मानव देहमें रहे हुये मुझ सच्चिदानन्द को मय अधिष्ठानको अवज्ञा करते हैं॥ ११

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः १२**

ये मां न जानन्ति ते मोघा वृथा आशा आशिषो येषां ते मोघाशाः तथा मोघानि कर्माणि येषां ते मोघकर्माणः निष्फल कर्माणस्तथा मोघं निष्फलं ज्ञानं येषां ते मोघज्ञानाः निष्फल ज्ञाना अतएव विचेतसः विवेकरहिताः राक्षसीं निशाचरीं आसुरीं रजस्तमःप्रधानां मोहनीं मोहकरीं प्रकृतिं स्वभावं आश्रिता आश्रितवन्तः क्रूरकर्माणो भवन्ति ॥ १२ ॥

ऐसे व्यर्थ आशावाले व्यर्थ कर्मवाले और व्यर्थ ज्ञानवाले अचेत लोग उत्तरोत्तर मोहमें फसानेवाली राक्षसी तथा आसुरी प्रकृति के ही आश्रित होकर रहते हैं ॥१२॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् १३

हे पार्थ हे राजन् ! तथा ये अहमेव आत्मा येषां ते महात्मानः अक्षुद्रचित्तास्तु पूर्वेभ्योऽत्यन्तविलक्षणाः दैवीं देवता रूपां सत्वप्रधानां प्रकृतिं स्वभावं आश्रिताः संश्रिताः न विद्यते अन्यत्र मद्व्यतिरिक्ते मनो येषां ते अनन्यमनसः एकाग्रचेतसः भूतादि सर्वभूतकारणं अव्ययं अविनाशिनं ज्ञात्वा बुद्ध्वा मां ईश्वरं भजन्ति ॥ १३ ॥

और हे पार्थ दैवी प्रकृतिके आश्रित महात्मा लोग तो सारे भूतों का आदि तथा अविनाशी जानकर मुझ कोही अनन्य चित्त से भजते हैं ॥ १३

सततं कीर्तयंतो मां यतंतश्च दृढव्रताः ।
नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते १४

सततं निरन्तरं मां श्रीभगवन्तं कीर्त्तयन्तः गुणगानं कुर्वन्तः

इन्द्रियोपसंहारशमदामादिषु यतन्तश्च प्रयत्नं कृतवन्तश्च दृढं चांचल्यरहितंव्रतं येषां दृढव्रताः मां हृदयेशयं नमस्यन्तश्च प्रणाम विदधन्तश्च भक्त्या स्नेहेन नित्य युक्ताः मदेकपरचित्ताः सन्तः उपासते सेवन्ते ॥ १४ ॥

वे सदा दृढव्रतवाले होकर इन्द्रियोंका संयम व मेरा कीर्तन करते हुए तथा भक्तिसहित मुझे नमस्कार करतेहुए चित्तको मेरे में लगाकर नित्य मेरीही उपासना करते हैं ॥१४॥

ज्ञानयज्ञेन चाप्यन्ये यजंतो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५

केचन मुनयो ज्ञानमेव यज्ञो ज्ञानयज्ञस्तेन ज्ञानयज्ञेन आत्मज्ञानरूपयज्ञेन मामीश्वरं पूजयन्तः उपासते उपासनां कुर्वन्ति अन्ये च मुनयः एकत्वेन एक मेव परं ब्रह्मेति अद्वैतभावेन उपासते भजन्ति केचिच्च पृथक्त्वेन आदित्यचन्द्रविष्णु ब्रह्माशिवादिमूर्त्तिभेदेन मामुपासते ध्यायन्ति अन्येच बहुधा ऽवस्थितः स एव भगवान् सर्वतोमुखः विश्वरूप इति मां ज्ञात्वा बहुधा बहुप्रकारेण उपासते चिन्तयन्ते ॥ १५ ॥

दूसरे ज्ञान यज्ञ से यजन करने वाले कोई मुझ परमात्मा को अभेद भावसे, कोई भेद भावसे और कोई सर्वतोमुख यानी विश्वरूप

जानकर अनेक भावसे भी उपासते हैं ॥१५॥

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मंत्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६॥

क्रतुः यज्ञाधिष्ठात्री देवता अहमेव यज्ञः अग्निहोत्रादि कर्मात्मकोऽहमेव, स्वधा मृतकपितामहादिभ्यो यदन्नस्यत्यागः श्राद्धादिस्तदपि अहमेव, येन जन्तव जीवन्ति तद्द औषधमप्य हमेव, येनाऽग्नौ द्रव्यादीनां प्रक्षेपणं क्रियते तद्ध मन्त्र मप्यहमेव आज्यं घृतादिक मप्यहमेव, यस्मिन् हूयते सोऽग्निरापि अहमेव यद्धुतं हवनकर्म तदपि अहमेवासिषम् ॥ १६ ॥

उन सबका संकल्प मैं हूं, यज्ञ मैं हूं, अन्न मैं हूं, वनस्पति मैं हूं मंत्र मैं हूं, घृत मैं हूं, अग्नि मैं हू नैवेद्य मैं हूं, और हवन क्रिया भी मैं ही हूं ॥१६॥

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥१७

अस्य जगतः पिता जनयिता माता योनिः धाता कर्मफल दाता पितामहः जनकस्य जनकः वेद्यं सर्वज्ञानादिसाधनैर्वेद्यं

वस्तु ब्रह्म पवित्रं पावनं ओंकारश्च ऋग्यजुःसामात्मकवेद श्चाहमेव ॥ १७ ॥

इस जगत्का माता, पिता, धारणकर्त्ता, पितामह, जाननेके योग्य पवित्र ॐकार तथा, ऋक् साम और यजुर्वेद, यह सब मैं ही हूं ॥१७॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् १८

किञ्चाहमीश्वरः अस्य जगतः गम्यते इति गतिः मोक्षादि फलरूपः भर्ता पोषकः प्रभुः स्वामी प्राणिनां कृत्याकृत्यस्य साक्षी द्रष्टा, निवसन्त्यस्मिन्निति निवासः आश्रयः, आर्तानां शरणं रक्षकः, सुहृत् अप्रार्थितहितकर्ता, प्रकर्षेण भवति अस्मादि तिप्रभवः उत्पत्तिस्थानं, प्रलीयते यस्मिन्निति प्रलयः लयस्थानं तिष्ठत्यस्मिन्निति स्थानं सकलाधारः, निधीयते स्थाप्यतेऽस्मि न्निति निधानं कर्मफलसमर्पणस्थानं, प्ररोहधर्मिणां अव्ययं बीजं प्ररोह कारणं, अविनाशि मूलकारणम् ॥ १८ ॥

सबका पोषक, स्वामी, साक्षी, प्रासव्य, वास स्थान रक्षक, सुहृद्, उत्पत्ति, प्रलय, आधार, भंडार, और अक्षय बीज भी मैं ही हूं ॥१८॥

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

हे अर्जुन ! अहमादित्यो भूत्वा तपामि, तथाऽहं वर्षं वृष्टिः तां अष्टसु मासेषु रश्मिभिः निगृह्णामि आकर्षयामि पुनः चतुर्षु मासेषु जल मुत्सृजामि त्यजामि देवानाञ्च अमृतं पीयूषं मृत्यानां मृत्युश्च, सत् स्थूलं परिदृश्यमानं, असच्च सूक्ष्मं एवं बहुधा मामुपासते ॥ १९ ॥

हे अर्जुन, सूर्यरूपसे तपकर जलको खींचने वाला और बर्षानेवाला मैंही हूं अमृत और मृत्यु। तथा सत् और असत् भी मैं ही हूं ॥१९॥

त्रैविद्या मां सोमपाः पूतपापा ।
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते ॥
ते पुण्यमासाद्य सुरेंद्रलोक ।
मश्नंति दिव्यान्दिवि देवभोगान् ॥ २०

ये पुन रक्षाः कामकामाः त्रैविद्याः ऋग्यजुःसामविदः सोमं पिबन्ति इति सोमपाः अमृतपास्तेनैव सोमपानेन पूत

पापाः शुद्धकिल्बिषाः यज्ञैरग्निष्टोमादिभिः मां इष्ट्वा पूजयित्वा स्वर्गगमनं स्वर्गगतिस्तां प्रार्थयन्तेऽभिलषयंते पुनस्ते पुण्यं पुण्य फलकं सुरेन्द्रलोकं शतक्रतो स्थानं आसाद्य संप्राप्य दिविस्वर्गे दिव्यान् अलभ्यान् देवानां भोगास्तान् देवभोगान् अश्नन्ति भुञ्जते ॥ २० ॥

वेदत्रयीके ज्ञाता और सोमरस पीनेवाले जोनिष्पाप ( परन्तु सकामी ) पुरुष यज्ञमें मेरा पूजन कर स्वर्गप्राप्तिकी प्रार्थना करते हैं वे पवित्र इंद्रलोकको प्राप्त होकर वहां देवों के दिव्य भोगों को भोगते हैं, ॥२०॥

ते तं भुक्त्वा स्वर्गलोकं विशालं ।
क्षीणे पुण्ये मर्त्यलोकंविशंति ॥
एवं त्रयीधर्ममनुप्रपन्ना ।
गतागतं कामकामा लभंते ॥२१॥

ते पुण्यात्मकं सुरेन्द्रलोक मासाद्य प्राप्य दिविस्वर्गे विशालं विस्तीर्णं स्वर्गलोकं भुक्त्वा पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति प्राप्नुवन्ति एवं प्रकारेण त्रयी वेदत्रयी तस्यामुक्तं धर्मं त्रयीधर्मं वैदिकं कर्मानुप्रपन्ना प्राप्ताः कामान्कामयन्ते इति

कामकामाः विषयकामुकाः सन्तः गताऽगतं जन्ममरणात्मक भवादं लभ्यन्ते प्राप्नुवन्ति ॥ २१ ॥

परन्तु विशाल स्वर्गलोकको भोगकर पुण्यके क्षीण होने पर फिर वो मृत्युलोक में ही आते हैं इस प्रकार वेदत्रयीके मार्ग को को अनुसरनेवाले भोगेच्छु पुनः पुनः आवागमनको पाया करते हैं ॥ २१ ॥

अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् २२

ये जनाः न अन्यः प्रयोजनं येषां ते अनन्याः मच्चिन्तनैक प्रयोजनाः सन्तः मां सर्वकल्याण गुणान्वितं चिन्तयन्तः स्मरन्तः परितः सर्वभावेन उपासते सेवन्ते नित्याभियुक्तानां अनवरता दरेण ध्याने व्यावृतानां तेषां जनानां योगं च क्षेमं च योग क्षेमं अपुनरावृत्ति रूपं योगं क्षेमंच वहामि प्रापयामि ॥ २२ ॥

जो अनन्य भावसे मेरा चिंतन करते हुए सदा मुझको उपासते हैं, उन नित्य युक्त जनोंका योगक्षेम मैं वहन करता हूं ॥२२॥

येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः।
तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम् ॥२३

हे कौन्तेय ! हे कुन्तीपुत्र! येऽप्यन्यदेवताभक्ताः अन्यासु शिवादिषु भक्ताः पूजकाः श्रद्धयान्विता आस्तिक्य बुद्धिमन्तः सन्तो मां यजन्ते पूजयन्ते तेऽपि मानवाः अविधिपूर्वकं अभेदबुद्धि पूर्वकं मामेव ईश्वर मेव यजन्ति अर्चयन्ति ॥ २३ ॥

जो अन्य देवोंके भक्त भी उनको श्रद्धासहित पूजते हैं, वे भी हे कौन्तेय, अविधि (अज्ञान) पूर्वक मुझको ही पूजते हैं ॥२३॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानंति तत्वेनातश्च्यवंति ते ।२४

हि यतोऽहमेवश्रौतानां स्मार्त्तानां च सर्वेषां यज्ञानां भोक्ता भोजकः प्रभुः फलार्पकश्चास्मि ते द्वैतवादिनः तत्त्वेन यथवत् मां नतु अभिजानन्ति अतोऽस्मात् अविधिपूर्वकं अभेदबुद्धि पूर्वकं इष्ट्वा यज्ञफलात् श्च्यवन्ति संसारगर्ते पतन्ति ॥ २४ ॥

क्योंकि मैं ही संपूर्ण यज्ञोंका भोगनेवाला और स्वामी हूं; वे मुझ को तत्त्व से वैसा नहीं जानते इसी कारण आवागमन में पड़ते हैं ॥ २४ ॥

यांति देवव्रता देवान् पितृन्यांति पितृव्रताः ।
भूतानि यांति भूतेज्या यांति मद्याजिनोऽपि माम् ॥

देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रताः देवान् यान्ति गच्छन्ति, पितृव्रताः श्राद्धादिक्रियापराः पितॄन् अग्निष्वातादीन् यान्ति, प्राप्नुवन्ति, भूतान् यजन्ति इति भूतेज्याः भूतप्रेतपूजकाः भूतानि भूतान्येव यान्ति, मामीश्वरं मूर्तिमन्तममूर्तिमन्तंच ये यजन्ति ते मद्याजिनः मा मेव यान्ति ॥ २५ ॥

देवतावों का यजन करने वाले देवलोकको पितरों की पूजने वाले पितृलोकको, भूतों को भजनेवाले भूतलोकको, और मेरा यजन (उपासना) करनेवाले मेरेको ही पाते हैं ॥२५॥

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥

यो मनुजः पत्रं पुष्पं फलं तोयं जलं भक्तया आदराति शयेन मे मह्यं प्रयच्छति, समर्पयति तस्य प्रयतात्मनः शुद्धबुद्धेः अहमीश्वरः तत्पूर्वोक्तं सर्वभक्त्युपहृतं स्नेहेन समर्पितं अश्नामि भुनज्मि ॥२६ ॥

विशुद्ध चित्तवाला जो पुरुष मुझे पत्र, पुष्प फल किंवा जल भी भक्तिसे अर्पण करता है उसकी वह भक्तियुक्त भेटको मैं प्रीतिसे पाता हूं ॥२६॥

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम् ॥२७॥**

यत् लौकिकं वैदिकञ्च करोषि यच्च देहधारणाय अश्नासि भुङ्क्ते यज्जुहोषि होमं करोषि यद्ध दानादिकं भोजनादिकं च ददासि दानं करोषि यत् तपस्यति तपश्चरसि हे कौन्तेय ! तत्सर्वं मदर्पणं मत्समर्पणं कुरुष्व अर्पयस्व ॥ २७

इसलिये हे कौंतेय, तू जो कुछ करे, जो खावे, जो होमे, जो देवे और जो तप करे, वह सब मुझेही अर्पण किया कर ॥२६॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥**

एवं पूर्वोक्त प्रकारेण शुभाशुभे इष्टाऽनिष्टाफले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्माण्येव बन्धनानि बन्धनभूतानि तैः कर्मबन्धनैः मत्समर्पणं कुर्वन् मोक्ष्यसे मुक्तो भविष्यसि सोऽयं संन्यास कर्मणां मत्समर्पणं तेन यो योगो मद्भक्तयात्मकः तेन युक्तो आत्मा अन्तःकरणं यस्य तादृशः कर्मबन्धनैः विमुक्तः सन् मामीश्वरं उपैष्यसि प्राप्स्यसि ॥ २८ ॥

ऐसा करनेसे शुभाशुभ फल देनेवाले कर्मोंके बंधनसे तू मुक्त रहेगा, और आसक्ति तथा कर्तृत्वाभिमानके त्यागरूप सन्यास योग में युक्त चित्तवाला होकर मुझको आ प्राप्त होगा ॥२८॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥

अहमीश्वरः सर्वभूतेषु सर्वप्राणिषु समस्तुल्यः न मे मम कोऽपिजनः द्वेष्यः द्वेष्टुं योग्योऽस्ति नचापि प्रियः स्नेही अस्ति ये तु जना मां भक्त्या भक्तिभावेन भजन्ति सेवन्ते ते स्वभावत एव मयि जगन्नियंतरि वर्तन्ते तेषु च जनेषु अहं वत तिष्ठामि ॥

यद्यपि मैं सारे भूतोंमें समान हूं और कोईभी मेरा शत्रु किंवा मित्र नहीं है तथापि जो मुझे भक्तिसे भजते हैं उनमें मैं और मुझमें वह विशेष रूपसे रहे हुए हैं ॥२९॥

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥३०

अपि चेत् यद्यपि सुदुराचारः सुदुराचारः अतीव कुत्सिताचारोऽपि न अन्यं भजति इति अनन्यभाक् अनन्यभक्तिः सन् मां भजते सेवते हि यतः स सम्यक् अवस्थितः सम्यगाचारः

अतः स साधुरेव मन्तव्यः ज्ञातव्यः ॥ ३० ॥

अति दुराचारी भी मुझे अनन्य भावसे भजने लगे तब उसे साधु ही मानना योग्य है, क्योंकि वह यथार्थ निश्चवाला हुआ है, ॥ ३० ॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति ।**
**कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१**

सम्यग् व्यवस्थितादेव क्षिप्रं शीघ्रमेव धर्मात्मा धर्म चित्तो भवति शश्वत् नित्यं शांतिं उपशमंच निगच्छति प्राप्नोति हे कौन्तेय ! त्वमेव मदाज्ञया प्रतिजानीहि प्रतिज्ञां कुरु विधेहि मे मम भगवतो भक्तः न प्रणश्यति न नाशमेष्यति ॥ ३१ ॥

वह शीघ्रही धर्मात्मा होता है, और शाश्वत शान्तिरूप मोक्षको प्राप्त होता है, हे कौंतेय, तू प्रतिज्ञासे जान कि मेरा भक्त कभी नष्ट नहीं होता ॥३१॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिम्**

हे पार्थ ! हे राजन् ! हि यस्मात् मद्भक्तिकारणात् येऽपि

पापयोनयः पापजन्मानोऽन्त्यजादयः स्त्रियो वैश्या गणिकास्तथा शोके द्रवन्तिति शूद्रारचस्युः तेऽपि मामीश्वरं व्यपाश्रित्य आश्रित्य परामुत्कृष्टां मोक्षाख्यां गतिं यान्ति प्राप्नुवन्ति ॥ ३२ ॥

हे पार्थ, स्त्रिया, वैश्य, शूद्र और नीच कुलवालेभी मेरा आश्रय लेकर परम गतिका पहुचते हैं, ॥३२॥

## किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥ अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ३३

पुण्याः जन्मनैव पवित्रा ब्राह्मणास्तथा राजानश्च ते ऋषयश्चः राजर्षयः मदाश्रयेण परांगतिं मोक्षत्वावाच्छिन्नां गतिं यान्ति इत्यत्र अस्मिन् विषये किं पुनश्चित्रं वैचित्र्यं, वैचित्र्यन्चैतदेव त्वं इमं परिहरयमानं अनित्यं नश्वरं असुखं सुखलेशहीनं मर्त्यलोकं प्राप्य मां परमात्मानं भजस्व अतस्त्वमपि संतरिष्यस्ये वेति भावः ॥ ३३ ॥

तब फिर पुण्यशील ब्राह्मण तथा भक्तिमान् राजर्षियोंका तो कहनाही क्या? इस लिये इस अनित्य और सुखरहित मनुष्य लोक को प्राप्त होकर तू मुझ को ही भज ॥३३॥

## मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।

मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥

मन्मना मयि एव मनोयस्यैवं भूतो भव तथा मद्भक्तोभव भवमद्याजी मद्यजनशीलो भव मामीश्वरं नमस्कुरु एवं आत्मानं मयि युक्त्वा नियुज्य मयि एव परायणः तत्परः सन् मां एष्यसि प्राप्स्यसि ॥ ३४ ॥

मुझ परमात्मा में ही मनको सदा रखने वाला हो, मुझ सर्वेश्वरकोही सर्व प्रकारसे (नाम गुण और प्रभावके श्रवण, मनन, कीर्तन, पठन, पाठन इत्यादि द्वारा) भजनेवाला हो, मुझ सर्वाधार कोही सब कुछ अर्पण करके आर्द्र चित्तसे पूजनेवाला हो, और मुझ परमपद प्रदाता कोही भाव भक्तिसहित नमस्कार कर इस प्रकार तन मन को सर्वदा मुझ में जोड़ कर मेरे परायण होनेसे तू मुझे ही प्राप्त होवेगा ॥३४॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अध्यात्मयोगो नाम नवमोऽध्यायः ॥९॥

———:::———

# दशमोऽध्यायः ।

श्रीभगवान् उवाच ॥

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१

हे महाबाहो हे दृढ्भुज ! भूय एव पुनरपि मे मम श्रीकृष्णस्य तत् परमं परमार्थरूपं उत्कृष्टं वचः वचनं शृणु निशामय यद्वचनं पूर्वोपदेशेन प्रीयमाणाय अति प्रसन्नाय ते तुभ्यं अर्जुनाय अहं श्रीकृष्णः हितकाम्यया हितेच्छया वक्ष्यामि वदिष्यामि ॥ १ ॥

हे महाबाहो, फिरभी मेरे उत्तम वचन श्रवण कर, जो तुझ प्रेम रखने वालेके लिये मैं हितकी इच्छासे कहता हूं ॥१॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥

हि यस्मात् अहं श्रीकृष्णः देवानां अमराणां महर्षीणां च सर्वशः सर्वप्रकारैः आदिः आदिकारणं मूलभूतोऽस्मि अतस्ते सुरगणाः ब्रह्मादयो महर्षयो भृग्वादयश्च मे मम प्रभवं प्रकृष्टं भवं वियदादिसृष्टिसामर्थ्यं न विदुः न जानन्ति ॥ २ ॥

मेरी उत्पत्तिको देवगण और महर्षिगण भी नहीं जानते, क्यों कि सर्वप्रकारसे मैं देवताओंका और महर्षियोंका भी आदि कारण हूं ॥२॥

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥**

यो मानवो लोकानां महान्तमीश्वरं लोकमहेश्वरं मां अजं जन्मरहितं अनादिं च वेत्ति जानाति मर्त्येषु मानवेषु मध्ये असम्मूढः मोहवर्जितः स ज्ञानी सर्वपापैः किल्बिषैः प्रमुच्यते ॥ ३ ॥

जो मुझको अजन्मा, अनादि और सारे लोकोंका महेश्वर जानता है वही इस मृत्यु लोकमें मोहरहित होकर सर्व भावसे मेरे परायण होता हुआ सारे पापों से छूट जाता है ॥३॥

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥४॥**

बुद्धिः अन्तःकरणस्य सूक्ष्माद्यर्थाऽवबोधनसामर्थ्यम् ज्ञानं आत्मादिपदार्थानामवबोधः, असंमोहः कार्येषु विचार पूर्वकं प्रवर्तनं, क्षमा सहनशक्तिः, सत्यं प्रमाणतर्काभ्यां यथार्थावगतस्य यथार्थत्वेन भाषणं, दमःइन्द्रियनिग्रहः, शमः शान्तिः, सुखमाह्लादः, दुःखं सन्तापः, भवः उद्भवः, अभावः विद्यमानस्याऽभावः सत्ताऽभावः, भयं भीतिः, अभयञ्च भीतेरभावः ॥ ४ ॥

बुद्धि, ज्ञान, निर्मोहता, क्षमा, सत्य इंद्रियसंयम, मनोनिग्रह, सुख, दुःख, जन्म, मृत्यु, भय, अभय ॥४॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवंति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥**

अहिंसा परपीडनाऽभावः, समता सर्वेषु प्राणिषु समचित्तता, तुष्टिः यावत्प्राप्तवस्तुषु सन्तोषः तपश्चरणं शरीरपीडनं, दानं यथा शक्तिधनादेः समर्पणम्, यशः धर्मनिमित्ताकीर्तिः, अयशः अपकीर्तिः पृथग्विधा नानाविधाः पूर्वोक्ता एते बुद्ध्या दयो भावाः सत्तावन्तः भूतानां प्राणिनां मत्तएव ईश्वरादेव भवन्ति जायन्ते ॥५॥

अहिंसा, समता, संतोष, तप, दान, यश, अपयश, इत्यादि, नाना प्रकारके सारे भाव प्राणिमात्रको मुझसेही होते हैं ॥५॥

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥६॥

सप्त भृग्वाद्याः चत्वार सनकादयश्च पूर्वे प्रसिद्धा एते महर्षय स्तथा चतुर्दश मनव स्तेसर्वे मयिएव भावो मनो येषा ते मद्भावाः मानसा हिरण्यगर्भरूपस्य मम मनस एवोद्भूताः अयोनिजा जाता उत्पन्नाः भवन् येषां एभ्य एव इमाः दृश्यमानाः प्रजाजाता ॥६॥

पूर्वके सप्त महर्षि तथा चार मनु, जिनसे जगत्में यह सारी प्रजा उत्पन्न हुई है; वे मेरेमें भाववाले सब मेरे संकल्पसे उत्पन्न हुए हैं ॥६॥

एतां विभूतिं योगं च मम योवेत्ति तत्त्वतः।
सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥७॥

यो जनः मम एतां यथोक्तां विभूतीं विस्तारंवा योगं च योगैश्वर्यसामर्थ्यं च तत्वतः यथावत् वेत्ति जानाति स मानवः अविकम्पेन अचलेन योगेन युज्यते युक्तोभवति

नात्रसंशयः कार्य्यः ॥७॥

मेरे इस विभूतिविस्तारको और योगसामर्थ्य को जो तत्त्व से जानता है; वह दृढ भावसे मेरे ही योगमें लग जाता है इसमें संदेह नहीं ॥७॥

## अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
## इति मत्वा भजंते मां वुधा भावसमन्विताः॥ ८॥

अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभवः उत्पत्तिः कारणं मत्त एव सर्वजगत् प्रवर्तते उत्पद्यते इति एवंमत्वा भावेन समन्विताः भावसमन्विता, मत्सेवनैक प्रयत्नवन्तः वुधाः विद्वांसः मामीश्वरं भजन्ते सेवन्ते ॥ ८ ॥

मैंही सबकी उत्पत्ति करनेवाला हूं और मेरेहीसे सारा जगत् प्रवर्त्तता है, ऐसा तत्त्वसे जानकर बुद्धिमान् लोग सदा भावयुक्त होते हुये मुझ परमात्माकोही भजते हैं ॥८॥

## मच्चित्ता मद्गतप्राणा: वोधयंतः परस्परम् ।
## कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥९॥

मयि चित्तं येषां ते मच्चित्ताः मां गताः याताः प्राणाः येषां ते मद्गतप्राणाः मद्गतजीवनाः परस्परं अन्योऽन्यं वोधयन्तः ज्ञापयन्तः मामीश्वरं कथयन्तश्च मम गुणानुवादं कुर्वन्तश्च

ये जनाःसन्ति ते नित्यं प्रतिदिनं तुष्यन्ति तोष मुपयान्ति रमन्ति च अनुरागं प्राप्नुवन्ति च ॥ ६ ॥

वे चित्त और प्राणोंको मेरेमें जोड़कर परस्परमें सदा मेरीही महिमाका बोध और कथन करते हुए संतोष और आनंदका पाते हैं ॥६॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयांति ते ॥१०॥

सतत युक्तानां नित्योत्साहवतां प्रीतिः प्रेमा तत्पूर्वकं भजतां सेवमनानां तेषां जनानां तं प्रसिद्धं बुद्ध्या योगः बुद्धियोगः तं बुद्धियोगं ज्ञानरूप योगं समाधिं ददामि प्रयच्छामि येन ज्ञानेन ते जनाः मामीश्वरमुपयान्ति प्राप्नुवन्ति ॥ १० ॥

उन सदा मन-प्राण मेरेमें जोड़कर मुझे प्रीतिपूर्वक भजनेवालोंको मैं ऐसी बुद्धिका योग देता हूं कि जिससे वे मुझको प्राप्त होते हैं ॥१०॥

तेषामेवानुकंपार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

तेषां भक्तानामेव अनुकम्पार्थं दयाहेतोः आत्मनोभाव

आत्मभावस्तस्मिन् तिष्ठतीति आत्मभावस्थः अन्तःकरणे वर्तमानोऽहं भास्वता देदीप्यमानेन ज्ञानमेवदीपं ज्ञानदीपं तेन ज्ञानदीपेन ज्ञानरूपदीपेन अज्ञानात् जातं इति अज्ञानजं अज्ञानोत्पन्नं तमः मोहान्धकारं नाशयामि ॥ ११ ॥

उन पर अनुग्रह करने को, उनके अन्तःकरण में रहा हुआ मैं, तत्वज्ञानरूपी तेजस्वी दीपक से अज्ञानजन्य अन्धकार (मोह) को नष्ट करता हूं ॥ ११ ॥

अर्जुन उवाच ।

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥

भवान् परंब्रह्म परमात्मा परंधाम परंतेज, पवित्रं पावनं. परमं पकृष्टं पुरुषं, शाश्वतं नित्यं, दिविभवंदिव्यं; आदि देवं सर्वदेवानां मादौभवं न जायते इति अजं अजन्मानं, विभुं व्यापकम् ॥ १२ ॥

सारे ऋषि आपको परब्रह्म परमधाम, परम पवित्र शाश्वत पुरुष दिव्य, आदि देव, अजन्मा तथा सर्वव्यापक कहते हैं ॥१२॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।

**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥**

सर्वे वसिष्ठादयः ऋषयः देवर्षिर्नारदः तथा असितः देवलस्य पिता, देवलः एतन्नामकः, व्यासः व्यासभगवांश्च त्वां श्रीकृष्णं इदृशं पूर्वोक्तगुणविशिष्टं आहुः कथयन्ति त्वं श्रीकृष्णश्च स्वयं मे मम ब्रवीषि अभाषिष्ठाः ॥ १३ ॥

देवर्षि नारद, असित, देवल, व्यास, तथा स्वयं आपभी मुझे वैसाही कहते हैं ॥१३॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥१४॥**

हे केशव के जले शेते इति केशव स्तत्सम्बुद्धौ हे केशव ! यन्मा मर्जुनं प्रति वदसि भाषसे एतत्सर्वं सकलं ऋतं सत्यं मन्ये अवजानामि परन्तु हि निश्चयेन हे भगवन् ते तव व्यक्तिं प्राकट्यं स्वरूपं वा देवा अमराः दानवाश्चापि न विदुः न जानन्ति ॥ १४ ॥

हे केशव, आप जो कुछ मुझे कहते हैं वह सब मैं सत्य मानता हूं, हे भगवन्, आपके पूर्ण स्वरूपको दानवभी नहीं जानते और देवभी नहीं जानते ॥१४॥

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५॥

हे पुरुषोत्तम ! हे भूतभावन ! सर्वेषां भूतानां उत्पादयितः हे भूतेश ! सर्वेषां भूतानां नियन्तः हे देव देव ! दैवतना मपि परमदैवत हे जगत्पते ! हे जगत्स्वामिन् ! त्वं स्वयमेव आत्मना आत्मानं वेत्थ जानासि नान्योज्ञातुं समर्थ इति भावः ॥ १५ ॥

हे पुरुषोत्तम हे भूतोंके उत्पन्न करनेवाले, हे भूतोंके ईश्वर, हे देवोंके देव, हे जगत्के स्वामी, स्वयं आपही अपनेसे अपनेको जानते हैं ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥

तव आत्मनो विभूतयः आत्मविभूतय ऐश्वर्यबलानि दिव्या हि विचित्राहि अत अशेषेण साकल्येन वक्तुं कथयितुं अर्हसि योग्योभवसि याभिः विभूतिभिः आत्मनो महात्म्यविस्तरैः त्वं इमान् दृश्यमानान् लोकान् व्याप्य अभिव्याप्य तिष्ठसि स्थितो भवसि ॥ १६ ॥

इसलिये आप अपनी जिन दिव्य विभूतियों द्वारा इन सारे

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामंत एव च ॥२०॥

गुडाका निद्रा तस्याईश स्तत्सम्बुद्धौ हे गुडाकेश हे जितनिद्र ! सर्वेषां भूतानां प्राणिनां आशयेऽन्तर्हृदि स्थितः आत्मा जीवात्मा अहमीश्वर एवतथा भूतानां प्राणिनां आदिश्च प्रथमोत्पत्तिकारणं च मध्यमं च स्थितिकारणं च, अन्तो लयस्थानं च, अहमेव ॥ २० ॥

हे गुडाकेश, सारे प्राणियोंके हृदयमें रहनेवाला आत्मा भी मैं हूं; और प्राणियोंका आदि मध्य तथा अंतभी मैंही हूं ॥२०॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥

आदित्यानां द्वादशानां मध्ये विष्णुः व्यापकधर्मात्मकोऽह मेवास्मि; तथा ज्योतिषां वह्निर्जगत् प्रकाशकानां मध्ये अंशुमान् सर्वप्रकाशकरश्मियुक्तः रविः सूर्योऽहमेव, मरुतां वायूनां मध्ये मरीचिर्नामकश्चन सर्वसुखोत्पादनरूपो वायुरस्मि; नक्षत्राणां मध्ये शशी चन्द्रोऽस्मि ॥ २१ ॥

आदित्योंमें विष्णु मैं हूं; प्रकाशकोंमें किरणोंवाला सूर्य मैं हूं;

मरुद्गणोंमें मरीचि मैं हूं; और नक्षत्रोंमें चंद्रमा मैं हूं ॥२१॥

वेदानां सामवेदोऽस्मि भूतानामस्मि वासवः ।
इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना॥२२॥

वेदानां ऋग्यजुः सामथर्वणां मध्ये सामवेदोऽस्मि, देवानां रुद्रादित्यानां मध्ये वासव इन्द्रोऽस्मि, इंद्रियाणां चक्षुरादीनामेकादशानां मध्ये संकल्पविकल्पात्मकं मनश्चाऽस्मि भूतानांमाणिनां मध्ये चेतना ज्ञानशक्ति रस्मि ॥ २२ ॥

वेदोंमें सामवेद मैं हू देवोंमें इन्द्र मैं हूं; इन्द्रियोंमें मन मैं हूं; और भूतोंमें चेतनाभी मैं हूं; ॥२२॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम्॥२३

एकादशानां रुद्राणां मध्ये शंकरः शिवोऽस्मि, यक्षरक्षसां यक्षाणां रक्षसां च मध्ये वित्तेशः कुबेरश्चाऽस्मि अष्टानांवसूनां मध्ये पावकः अग्निरस्मि शिखरिणां शिखरशोभिनां पर्वतानां मध्ये मेरुरस्मि ॥२३॥

रुद्रोंमे शंकर मैं हूं; यक्ष राक्षसोंमें कुबेर मैं हूं, वसुओंमे अग्नि मैं हूं पर्वतोंमें सुमेरु मैं हू ॥२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥२४॥

हे पार्थ हे राजन् पुरोधसां राजपुरोहितानां मध्ये मामीश्वरं मुख्यं प्रधानं बृहस्पतिं गुरुं विद्धि जानीहि सेनानीनां सेनापतीनां मध्ये स्कन्दो देवसेनापति रस्मि सरसां जलाशयानां मध्ये सागरो रत्नाकरोऽस्मि ॥२४॥

हे पार्थ, पुरोहितोंमें मुख्य बृहस्पति मेरेको जान; सेनापतियोंमें मैं कार्तिकेय हूं और जलाशयोंमें मैं सगर हूं ॥२४॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५

महर्षीणां मरीच्यादीनां मध्ये भृगु रहमस्मि गिरां वाचां अर्थाभिधायिनां शब्दानां मध्ये एकमक्षरं एकाक्षरं ओंकारात्मकं अहमस्मि यज्ञानां जपयज्ञोऽस्मि स्थावराणां अचलां मध्ये हिमालयोऽस्मि ॥ २५ ॥

महर्षियोंमें भृगु मैं हूं, वाणीमें एकाक्षर ॐकार मैं हूं, यज्ञों में जप यज्ञ मैं हूं और स्थावरोंमें हिमालय मैं हूं ॥२५॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।

गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६

सर्ववृक्षाणां सर्वतरूणां मध्ये अश्वत्थोऽस्मि, पिप्पलोऽस्मि देवानां ऋषीणां च मध्ये अहं नारदोऽस्मि,गन्धर्वाणां गायकानां मध्ये चित्ररथोस्मि, चित्ररथनामा गन्धर्वोऽस्मि, धर्मवैराग्यैश्वर्यातिशयं प्राप्तानां सिद्धानां मध्ये कपिलो मुनिरस्मि ॥ २६ ॥

सारे वृक्षों में पीपल, देवर्षियों में नारद गन्धर्वों में चित्ररथ, तथा सिद्धों में कपिलमुनि मैं हूं ॥२६।

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥

अश्वानां तुरगाणां मध्ये मां अमृतोद्भवं अमृतनिमित्त मथनोद्भवं उच्चैः श्रवसं विद्धि जानीहि गजेन्द्राणां हस्तीश्वराणां मध्ये ऐरावतं इन्द्रहस्तिनं मां विद्धि नराणां मनुजानां मध्ये नराधिपं भूपतिं मां जानीहि ॥ २७ ॥

अश्वों के मध्य क्षीरसागर से उत्पन्न उच्चैश्रवा, गजेन्द्रों में ऐरावत और नरों में नरपति (राजा) मुझको जान ॥२७।

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥२८

आयुधानां शस्त्राणां मध्येऽहं वज्रमस्मि धेनूनां दोग्ध्रीणां मध्ये कामधुक् कामधेनु रस्मि प्रजनः प्रजोत्पादकः कन्दर्पः कामोऽस्मि सर्पाणां विषधराणां मध्ये वासुकि सर्पश्चास्मि ॥२८

मैं आयुधों में वज्र, गौवों में कामधेनु प्रजोत्पादकों में काम देव और सर्पों में वासुकि हूं ॥२८॥

अनंतश्चास्मि नागानां वरुणो यादसामहम् ।
पितृणामर्यमा चास्मि यमः संयमतामहम् ॥२९

नागानां नाग विशेषाणां मध्ये अनन्तनामा नागराजश्चाऽस्मि यादसां अब्देवतानां मध्ये वरुणः वरुणदेवताऽस्मि पितृणां मध्येऽर्यमानाम पितृराजोऽस्मि संयमतां नियमं कुर्वतां दण्ड दातृणां मध्ये यमः यमराजः धर्मराजश्चास्मि ॥२६॥

मैं नागों में अंतरहित ऐसा शेषनाग, और जल देवताओं में वरुण हूं, पितरों में मैं अर्यमा और संयम करनेवालों में यम हूं ॥२६

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम्॥३०

दैत्यानां दितिसुतानां मध्ये दैत्यकुलोद्धारकप्रह्लादोऽस्मि

कलयतां गणनं कुर्वतां गणकानां मध्ये कालः समयश्चास्मि मृगाणां कुरंगानां हिरणानां मध्ये मृगणा मिन्द्रः मृगेन्द्रः सिंहो ऽहम्— पक्षिणां पक्षवतां पतत्रिणां मध्ये वैनतेयः विनताया अप त्यं वैनतेयः गरुडश्चाऽस्मि ॥३०॥

मैं दैत्यों में प्रह्लाद और काल गणना करनेवालों में काल हूं, पशुओं में मैं सिंह और पक्षियों में मैं गरुड़ हूं ॥३०॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जान्हवी ॥**

पवतां पावनकर्तॄणां वेगवतां मध्ये पवनः वायुरस्मि शस्त्राणि विभूतिइति शस्त्रभृतस्तेषां शस्त्र भृतां शस्त्रधारिणां मध्ये रामः दशरथात्मजश्चाऽस्मि झषां मत्स्यादीनां मध्ये मकर श्चाऽस्मि श्रोतसां प्रवहज्जलां नदीनां मध्ये जाह्नवी गङ्गाऽह मस्मि ॥३१॥

पवित्र करने वालों में वायु और शस्त्रधारियों में दाशरथि राम मैं हूं; मत्स्यों में मगरमच्छ और नदियों में गंगा मैं हूं ॥३१॥

**सर्गाणामादिरंतश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥**

सृज्यन्ते इति सर्गा स्तेषां सर्गाणां सृष्टीनां आदिः उत्पत्ति कारणं तथा अन्तोऽवसानं लयः मध्यं पालकश्चाऽस्मि चतुर्दश संख्याकानां विद्यानां मध्ये अध्यात्म विद्या आत्मविद्या प्रवदतां वादजल्पवितण्डा मधिकृत्य प्रवृत्तानां मध्ये वादः तत्वनिर्णायक श्चास्मि ॥३२॥

हे अर्जुन, सृष्टिमात्र का आदि, मध्य तथा अन्त मैं हूं विद्याओं में अध्यात्मा विद्या मैं हूं; और कुशल वादी प्रतिवादीयों में वाद मैं हूं ॥३२॥

अक्षराणामकरोऽस्मि द्वंद्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुख ३३

अक्षराणां क, ख, ग, घा, दीनां वर्णानां मध्ये अकार वर्णोऽस्मि सम्यक् प्रकारेण अस्यन्ते पुञ्जिप्यैकीक्रियन्ते वर्णाः वर्णघटकशब्दाः येषु तेः समासास्तेषां समूह इति सामासिकः समाससमूहस्य मध्येऽहं द्वन्द्वः द्वन्द्वसमासोऽस्मि (यथा समासेषु उभयपदार्थ प्रधानोद्वन्द्वसमासः प्रधानोस्ति एव महमपि प्रधानः श्रेष्ठः) अक्षयः क्षयहीनः अहंकालः (काल-स्यापि कालोऽस्मि विश्वतोमुखः सर्वतोमुखः अहंधाता अलौकिकसृष्टयुत्पादकश्चास्मि ॥ ३३ ॥

-, मैं अक्षरों में अकार, समासों में द्वन्द्व समास, कालों में अक्षय काल और पालकों में जगत् का सर्वतोमुख पालन करनेवाला हूं ॥३३॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिःक्षमा

सर्वं हरतीति सर्वहरः प्रलयकाले सर्वसंहारकारी मृत्युः मारणधर्माऽहमेव भविष्यतां उत्पत्स्यमानानां प्राणिपदार्थानां उद्भवः उत्पत्तिकारणं अभ्युदयश्चाहमेव नारीणां स्त्रीणां स्त्री लिङ्गीनां विभूतीनां मध्ये या कीर्तिः धार्मिकत्वनिमित्ताख्यातिः श्रीः लक्ष्मीः वाक् सरस्वती स्मृतिः स्मरणशक्तिः मेधा ग्रन्थधारण शक्तिः धृतिः धैर्य क्षमा मानापमानयो रविकृतचित्तता ऽहमेव ॥ ३४ ॥

मरनेवालोंका सर्व हारक मृत्यु और उत्पन्न होनेवालों की उत्पत्ति मैं हूं, स्त्रियों में (स्त्रीलिङ्ग वाचक शब्दों में) कीर्ति, सौंदय, वाणी, स्मृति बुद्धि, धैय और क्षमा मैं हूं ॥३४॥

बृहत्साम तथा साम्नां गायत्री छंदसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥३५

साम्नां सामपठितऋग्विशेषाणामृचां मध्ये बृहत्साम ऋग् विशेषोऽहं छन्दसां गायत्री छन्दोऽहं मासानां चैत्रादीनां मध्ये मार्गशीर्षोऽहं ऋतूनांग्रीष्मादीनां मध्ये कुसुमाकरः कुसुमसंपत्तिकरः रमणीयवसन्तोऽहम् ॥३५॥

साम श्रुतियों में बृहत्साम, छन्दोंमें गायत्री, मासोंमें मर्गशीर्ष और ऋतुओं में बसन्त मैं हूं ॥३५॥

## द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
## जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम्

छलयतां वञ्चकानां मध्ये द्यूतं सर्वस्वापहरणकारणमहमस्मि तेजस्विनां तेजवतां मध्ये तेजः प्रभा जयवतां मध्ये जयोऽस्मि व्यवसायिनां उद्योगिनां मध्येऽहं व्यवसायः उद्योगोऽस्मि सत्त्ववतां सात्विकानां सतोगुणः विशिष्टानां मध्ये सत्वं धर्मवैराग्यादिसत्वकार्यमहमेवास्मि ॥ ३६ ॥

फंसानेवाली वस्तुओं में जूवा, तेजस्वियों का तेज, जीतनेवालों का जय, निश्चयवालों का निश्चय और सात्विकों का सत्त्व मैं हूं ॥ ३६ ॥

## कृष्णीनां वासुदेवोऽस्मि पांडवानां धनंजयः ।

मुनीनामप्यहं व्यासः कवीनामुशना कविः ३६

वृष्णीनां यादवानां मध्ये वासुदेवोऽस्मि पाण्डवानां पाण्डुपुत्राणां मध्ये धनंजयोऽर्जुनश्चाहमेवास्मि मुनीनां सर्वशास्त्रार्थावगन्तॄणां मध्ये व्यासः कृष्णद्वैपायनोऽस्मि कवीनां काव्यशक्तिशालीनां मध्ये उशना कविः भार्गवोऽस्मि ॥ ३७ ॥

मैं वृष्णिवंशियों में वासुदेव, पाण्डवों में धनंजय, मुनियों में व्यास और कवियों में शुक्र हूं ॥३७॥

दंडो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ।

दमयतां दण्डदातॄणां मध्येऽहं दण्डः निग्रहोऽस्मि जिगीषतां जेतुमिच्छतां मध्ये नीतिरस्मि गुह्यानां गोप्यानां च मध्ये मौनमस्मि ज्ञानवतां ज्ञानिनां मध्ये ज्ञानमस्मि ॥ ३८ ॥

शासन करने वालों का दण्ड मैं हूं जयेच्छुओं की नीति मैं हूं, गुह्य रखने वालों का मौन मैं हूं, और ज्ञानवालों का ज्ञानमैं हू, ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥

हे अर्जुन ! यच्चापि सर्वभूतां सर्वप्राणिनां बीजं प्ररोह कारणं ( उत्पत्ति कारणं ) तद्बीज महमीश्वर एवास्मि यच्च चराऽचरं स्थावरजंगमात्मकं भूतं प्राणिसमूहमस्ति विद्यते तत् सर्वं चराचरं भूतं प्राणिजातं ममेश्वरेण विना न स्यात् न भवेत् ॥ ३९ ॥

और हे अर्जुन, सारे भूतों की उत्पत्तिका कारण रूप जो कुछ बीज है वह मैंही हूं, क्योंकि चराचर भूतों में ऐसा कोई पदार्थ नहीं है जो मेरे विना हो सके ॥३९॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥**

हे परंतप ! हे उत्कृष्टतप ! ममेश्वरस्य दिव्यनां सर्वगुण संपन्नानां विभूतीनामैश्वर्याणां अन्तोऽवसानं नास्ति न विद्यते एषः दृश्यमानः विभूतेरैश्वर्यस्य विस्तरः विस्तारो मया तु उद्देशतः संक्षेपतः प्रोक्तः कथितः ॥ ४० ॥

हे परंतप, मेरी दिव्य विभूतियों का अन्त नहीं है, विभूतियों का यह विस्तार तो मैंने केवल संक्षेप से ही कहा है ॥ ४० ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥४१॥

यत् यत् वस्तुमात्रं विभूतिमत् ऐश्वर्ययुक्तं श्रीमत् शोभा युक्तं ऊर्जितमेव वा बलाद्यतिशयुक्तं वा तत् तत् सर्वं ममेश्वरस्य तेजोंशसम्भवं चित्तशक्तेरंशेन संभूत मेव इति त्वं अवगच्छ जानीहि ॥ ४१ ॥

जो जो वस्तु ऐश्वर्ययुक्त, कीर्त्तियुक्त किंवा बल-प्रभावयुक्त है, उस उसको तू मेरे ही तेज के अंशसे उत्पन्न हुई जान ॥४१॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

हे अर्जुन ! अथवा ( इति पक्षान्तरे ) एतेन पूर्वोक्तेन बहुना नानाविधेन ज्ञातेन अवबुध्येन किं प्रयोजनम् अह मीश्वरः इदंपरिदृश्यमानं कृत्स्नं सम्पूर्णं जगत् एकांशेन एक पादेन विष्टभ्य स्तम्भनं कृत्वा स्थितोऽस्मि ॥ ४२ ॥

अथवा हे अर्जुन, इस बहुत जानने से तेरा क्या प्रयोजन ?

इतनाही याद रखकर कि मैं अपने एक ही अंशमात्रसे इस सारे जगत् को धारण करके स्थित हूं॥४२॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥१०॥

# एकादशोऽध्यायः ॥

अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १॥

मदनुग्रहाय मयि अनुकम्पार्थाय परमं सद्यः शोकमोह निवर्तकत्वेनोत्कृष्टं गुह्य मतीव गोप्यं यद्द आत्माऽनात्मविवेकार्थं शास्त्रं, अध्यात्मं तत्संज्ञाऽस्यजात मिति, अध्यात्मसंज्ञितं, आत्मावबोधकं वचः वचनं त्वया वासुदेवेन उक्तं मामुपति निवेदितं तेन अध्यात्मबोधकेन वचसा मम अर्जुनस्य अयं भ्रातृ वधकारणरूपो मोहः अविवेकः विगतः विशेषेण नष्टोजातः ॥१

मेरे पर अनुग्रह करने के लिये आपके द्वारा जो अध्यात्मज्ञान के परम गुह्य वचन कहे गये, उससे मेरा यह मोह नष्ट हो गया है ॥१॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।

त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥

कमलस्यपत्रं कमलपत्रं, तद्वदक्षिणी यस्य सः कमलपत्राक्षः तत्संबुद्धौ हे कमलपत्राक्ष ! हे कमलनयन ! त्वतः भवत्सकाशात् भूतानां प्राणिनां भव उत्पत्तिः अव्ययः प्रलयः तौ भवाव्ययौ विस्तरशः विस्तरेण मया अर्जुनेन श्रुतौ आकर्णितौ अव्ययं अक्षयं माहात्म्यमपि श्रुत माकर्णितञ्च ॥ २ ॥

हे कमलनयन, भूतोंकी उत्पत्ति तथा लय आपसेही होता है यह मैंने आपसे विस्तार सहित सुना, और आप का अक्षय महात्म्य भी सुना ॥२॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥३॥

हे परमेश्वर ! हे सर्वाधीश ! यथा येनप्रकारेण त्वं श्री कृष्णः आत्मानं स्वस्वरूपं आत्थ कथयसि एतत् तवस्वरूपं एवं एव मेव (यथा कथयसि तादृगेवनान्यथा ) तथापि हे पुरु षोत्तम हे पुरुषश्रेष्ठ ते तव ईश्वरस्येदं ऐश्वरं विश्वात्मकं रूपं स्वरूपं द्रष्टुं अवलोकयितुं इच्छामि वांछामि ॥ ३ ॥

हे परमेश्वर, आप अपने को जैसा कहते हो मैं ऐसा ही है, परंतु हे पुरुषोत्तम, आप के उस ऐश्वर्ययुक्त स्वरूप का मैं देखना चाहता हूं ॥३॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**

हे प्रभो ! हे स्वामिन् ! योगेश्वर ! यदि चेत् मया अर्जुनेन तत् तवस्वरूपं द्रष्टुं अवलोकयितुं शक्यं मन्यसे ज्ञायसे ( यदि मयि तद्दर्शनाधिकारं पश्यसि ) ततः तस्मात् त्वं श्रीकृष्णः मे मम अव्ययं अविनाशिनं आत्मानं मायामयं आत्मानं विराट् स्वरुपं दर्शय अवलोकय ॥४॥

हे प्रभो, यदि आप ऐसा मानते हो कि वह अविनाशी रूप मेरे से देखाजाना शक्य है, तो हे योगेश्वर, आप वह मुझे दिखलाइये ॥४॥

श्रीभगवान् उवाच

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नाना विधानि दिव्यानि नाना वर्णाकृतीनि च ॥५॥**

हे पार्थ ! हे राजन् ! मे मम शतशः अथ सहस्रशः अनेकशः नानाविधानि अनेकप्रकाराणि दिविभवानि दिव्यानि अलौकिकानि तथा नाना विलक्षणा अनेके नीलपीतादिप्रकारा वर्णा *स्तथाऽऽकृतयोऽवयवसंस्थानविशेषा येषांरूपाणां तानि नानावर्णकृती* नि च रूपाणी स्वरूपाणि पश्य अवलोकय ॥ ५ ॥

हे पार्थ, मेरे अनेक प्रकार के तथा अनेक वर्ण और आकृति वाले यह सैकड़ों तथा हजारों दिव्य रूपों को देख ॥५॥

**पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६॥**

हे भारत ! हे भरतवंशोद्भव ! मम देहे द्वादशात्मकान् आदित्यान् भानून् अष्टसंख्याकान् वसून् एकादशसंख्यान् रुद्रान् अश्विनौ अश्विनीकुमारौ मरुतः देवगणविशेषान् तथा बहूनि असंख्येयानि अदृष्टपूर्वाणि पूर्वअदृष्टानि आश्चर्याणि अद्भुतानि च पश्य अवलोकय ॥ ६ ॥

हे भारत, आदित्यों को, वसुओं को, रुद्रों को, अश्विनी कुमारों को, मरुत्गणों को और पहिले कभी न देखे हुए बहुतेरे आश्चर्यों को देख ॥६॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७॥

हे गुडाकेश ! हे जितनिद्र ! इह मम श्रीकृष्णस्य देहे शरीरे एकस्थं एकस्मिन्नेवाऽवयवे नखाग्रमात्रे स्थितं विराजमानं कृत्स्नं सम्पूर्णं चराचरेण सहितं सचराचरं जड़जीव सहितं जगत् पश्य अवलोकय यच्च अन्यत् जयपराजयादि द्रष्टु मिच्छसि तदपि पश्य ॥ ७॥

हे गुडाकेश, सारे चराचर जगत् को तथा और भी जो कुछ देखना चाहता है, उसको, आज मेरे इस देह के एक ही भाग में स्थित देख ले ॥७॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

अनेन चर्मघटितेन स्वचक्षुषा स्वकीयेन नेत्रेण तु विश्वरूप धरं मामीश्वरं द्रष्टुं अवलोकयितुं न शक्यसे नसमर्थो भवसि अतः ते तुभ्यं दिव्यं अलौकिकं चक्षुः ददामि अर्पयामि तेन चक्षुषा मे मम योगमैश्वरं योगशक्त्यतिशयं पश्य अवलो

कय ॥ ८ ॥

परंतु अपने इन लौकिक नेत्रों से तू मेरे को नहीं देख सकेगा मैं तुझे दिव्य चक्षु देता हूं, उससे मेरे ऐश्वर्य को तथा योग सामर्थ्य को देख ॥८॥

संजय उवाच ।

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

हे राजन् ? हे धृतराष्ट्र ! महांश्चासौ योगेश्वरः महायोगेश्वरः हरिः नारायणः एवं पूर्वोक्तप्रकारेण उक्त्वा भणित्वा ततः तदनन्तरं पार्थाय पृथुसुताय अर्जुनाय परमं दिव्यं ऐश्वरं रूपं दर्शयामास अवलोकयामास ॥ ६ ॥

हे राजन, ऐसा कहकर फिर महायोगेश्वर श्रीहरिने पार्थ को अपना परम ऐश्वर्ययुक्त दिव्यरूप दिखाया ॥६॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
नेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

अनेकानि वक्त्राणि आननानि नयनानि नेत्राणि यस्मिन्

तद् अनेकवक्त्रनयनम् अनेकानि असंख्यानि अद्भुतानि विस्मापकानि दर्शनानि यस्मिन् तदनेकाद्भुतदर्शनम् अनेकानि दिव्यानि अलौकिकानि आभरणानि अलंकाराणि यस्मिन् तदनेकदिव्याभरणम् तथा दिव्यानि विचित्राणि अनेकानि बहूनि उद्यतानि उत्थापितानि आयुधानि चक्रादीनि यस्मिन् तद्द दिव्यानेकोद्यतायुधम् एवं भूतं रूपं दर्शयामास ॥ १० ॥

अर्जुन ने उस रूपको अनेक मुख और नेत्रोंसे युक्त, अनेक अद्भुत दर्शनोंवाला, अनेक दिव्य आभूषणोंवाला, अनेक दिव्य आयुधों को उठाया हुआ ॥१० ॥

दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ।
सर्वाश्चर्यमयं देवमनंतं विश्वतोमुखम् ॥११॥

दिव्यानि अलौकिकानि माल्यानि पुष्पमाल्यानि अम्बराणि वस्त्राणि च घ्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरम् दिव्यं अलौकिकं गन्धानुलेपनं सुरभिचन्दनानुलेपनं यस्य तं दिव्य गन्धानुलेपनं सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् नास्यान्तोऽस्तीति अनन्तस्तं अनन्तं सर्वतः परिच्छेदरहितं विराट्रूपं दर्शयामास ॥

दिव्य माला और वस्त्रों को धारण किया हुआ, दिव्य

गंधका अनुलेपन किया हुआ सर्व आश्चर्यों से युक्त, प्रकाशमय, सीमा रहित तथा सर्व ओर मुखवाला, ऐसा देखा ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशि सा स्याद्भासस्तस्य महात्मनः ॥१२

दिवि अंतरिक्षे युगपदेवोदितस्य सूर्यसहस्रस्य भानुसहस्रस्य युगपदेव उत्थिता प्रादुर्भूता भाः प्रभा यदि भवेत् सा प्रभा तस्य महात्मनः पुरुषोत्तमस्य अनेकात्मरूपस्य भासः कान्तेः सदृशी तुल्या स्यात् जायेत । किन्तु न स्यादेवेति काकूक्तिः एतादृशंरूपं दर्शयामास ॥ १२ ॥

आकाश में यदि सहस्र सूर्योंका प्रकाश एक साथ प्रकट होवे तब भी वह कदाचित् ही महात्मा के उस विश्वरूप के सदृश होवे ॥ १२ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥१३॥

तत्र तस्मिन्नेव विश्वरूपे एकस्थं एकस्मिन्स्थितं अनेकधा प्रविभक्तं नानाप्रकारविभागयुक्तं कृत्स्नं सम्पूर्णं जगत् तदा

तस्मिन्समये पाण्डवः अर्जुनः देवदेवस्य पूज्यानामपि पूज्यस्य हरेः शरीरे देहे अपश्यत् दृष्टवान् ॥ १३ ॥

उस समय अर्जुन ने देवों के देव श्रीकृष्ण के शरीर में अनेक प्रकार से ·

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

ततस्तदनन्तरं स पूर्वोक्तः प्राप्तदिव्यदृष्टिः विस्मयेन आविष्टः विस्मयाविष्टः आश्चर्यरसनिमग्नः हृष्टानि रोमाणि यस्य स हृष्टरोमा, उत्पुलकिताङ्गः धनंजयः अर्जुनः शिरसा मस्तकेन विश्वरूपधरं देवं प्रणम्य प्रकर्षेण नमनं कृत्वा कृताञ्जलिः सम्पुटीकृतहस्तः सन् अभाषत उक्तवान् ॥ १४ ॥

उसके अनन्तर वह आश्चर्यचकित व हर्षित रोमांचवाला धनंजय देव को शिर से प्रणाम कर हाथ जोडे हुए बोला ॥१४॥

पश्यामि देवांस्तव देव देहे ।
सर्वांस्तथा भूतविशेषसंघान् ॥
ब्रह्माणमीशं कमलासनस्थ ।

मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५॥

हे देव ! हे पूज्य ! तव देहे सर्वान् सम्पूर्णान् देवान् इन्द्रादिविबुधान् तथा भूतविशेषाणां स्थावरजङ्गमानां नाना संस्थानविशेषाणां संघाः समूहास्तान्भूतविशेषसंघान् कमलासनस्थं पद्मासनस्थं ब्रह्माणं ईशं ईशितारं महादेवं ऋषींश्च वसिष्ठादीन् दिव्यान् दिविभवान् सर्वान् कृत्स्नान् उरगांश्च वासुकिप्रभृतींश्च पश्यामि अवलोकयामि ॥ १५ ॥

हे देव, आपके शरीरमें सारे देवों को, अनेक प्राणियों के समुदायों को, कमल के आसनपर बैठे हुए ब्रह्माको, महादेवको, संपूर्ण ऋषियों को तथा दिव्य सर्पों को मैं देखता हूं॥१५॥

अनेकबाहूदरवक्त्रनेत्रं ।

पश्यामि त्वां सर्वतोऽनंतरूपम् ॥

नांतं न मध्यं न पुनस्तवादिं ।

पश्यामि विश्वेश्वरविश्वरूपम् ॥१६॥

हे विश्वेश्वर ! हे विश्वपालक ! विश्वरूप तव भवतः आदिः उत्पत्तिस्थानं पुनः मध्यं स्थितिस्थापनं अन्तं अवसानं च न पश्यामि नावलोकयामि सर्वतः चतुर्दिक्षु उपर्यधश्च अनन्तं

अपरिच्छिन्नं रूपं अस्य तं अनन्तरूपं अनेकरूपं त्वां भवन्तं अनेके अनन्ताः बाहवः भुजाः उदराणि वक्त्राणि मुखानि नेत्राणि चक्षूंसि यस्य तं अनेक बाहूदरवक्त्रनेत्रं पश्यामि अवलोकयामि ॥ १६ ॥

हे विश्व के स्वामिन्, आपको अनेक हाथ पैर मुख और नेत्रों से युक्त तथा सब ओर से अनंत रूपोंवाला देखता हूं.हे विश्व रूप, न आप के अंत को, न मध्य को और न आदि को ही देखता हूं ॥ १६ ॥

किरीटिनं गदिनं चक्रिणं च ।
तेजोराशिं सर्वतो दीप्तिमंतम् ॥
पश्यामि त्वां दुर्निरीक्ष्यंसमंताद् ।
दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

त्वां श्रीकृष्णं किरीटं शिरोभूषणं तदस्यास्तीति किरीटी तं किरीटिनं तथा गदा यस्य विद्यते इति गदी तं गदिनं तथा चक्रं यस्यास्तीति चक्री तं चक्रिणं तेजसः राशी तेजोराशी तं तेजोराशिं तेजः पुञ्जं सर्वतो दीप्तिर्यस्यास्ति स दीप्तिमान् तं सर्वतोदीप्तिमन्तं आसमन्तात्कान्तिमन्तं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं

दुर्निरीक्ष्यं द्रष्टुमशक्यं दीप्तौ प्रकाशमानौ यौ अनलार्कौ अग्नि भानू तयोरिवद्युतिर्यस्य तादृशं अप्रमेयं अपरिच्छेद्यं पश्यामि अवलोकयामि ॥ १७ ॥

आपको मैं मुकुट युक्त गदायुक्त, चक्रयुक्त, सब ओर से प्रकाश मान, तेज का पुंज, प्रज्वलित अग्नि तथा सूर्यके सदृश ज्योतियुक्त, सब ओरसे दुर्निरीक्ष्य तथा अमाप देखता हूं ॥१७॥

त्वमक्षरं परमं वेदितव्यं।
त्वमस्य विश्वस्य परं निधानम्।
त्वमव्ययः शाश्वतधर्म गोप्ता।
सनातनस्त्वं पुरुषो मतो मे॥१८॥

त्वं श्रीकृष्णः न क्षरतीति अक्षरं अक्षरस्वरूपं परमं उत्कृष्टं ब्रह्मवेदितव्यं ज्ञातव्यं त्वं अस्य विश्वस्य परं उत्कृष्टं निधीय तेऽस्मिन्निधानं लयस्थानं त्वं अव्ययः अविनाशी नित्यःशश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता परिपालकः सनातनः चिरंतनः पुरुषः पुरुषोत्तमः मे मम मतः संमतः अभिप्रेतः ॥ १८ ॥

आपही जानने योग्य अक्षर परब्रह्म हैं, आपही इस विश्व के परम आश्रय हैं, आपही शाश्वत धर्म के रक्षक हैं और आपही अवि

नाशी सनातन पुरुष हैं, ऐसा मेरा मत है ॥१८॥

अनादिमध्यांतमनंतवीर्यं ।
मनंतबाहुं शशिसूर्यनेत्रम् ॥
पश्यामि त्वां दीप्तहुताशवक्त्रं ।
स्वतेजसा विश्वमिदं तपंतम् ॥१९॥

आदिश्च मध्यं च अन्तश्च न विद्यते यस्य सं अनादिमध्यान्तस्तं अनादिमध्यान्तं उत्पत्तिपालनावसानरहितं अनन्तं संख्यारहितंपराक्रमो यस्य तं अनन्तवीर्यं अनन्ताः अनेके वाहवो यस्य तं अनन्त बाहुँ असंख्यातभुजं शशिसूर्यौं चन्द्रभानू नेत्रे यस्य तं शशिसूर्यनेत्रं चन्द्रादित्यनयनं दीप्तो धूमादिरहितो हुताशः अग्नि वक्त्रे मुखे यस्य तं दीप्तहुताशवक्त्रं स्वतेजसा चैतन्य ज्योतिषा इदं विश्वरूपं तपन्तं प्रकाशयन्तं त्वां पश्यामि अवलोकयामि ॥ १९ ॥

आपको आदि मध्य और अन्त से रहित, अनन्त सामर्थ्य से युक्त, अनन्त हाथोंवाला, चन्द्र सूर्यरूपी नेत्रोंवाला, प्रज्वलित अग्नि के सदृश मुखवाला, तथा अपने तेज से इस सारे जगत्‌को तपायमान करता हुआ देखता हूं ॥१९॥

द्यावापृथिव्योरिदमंतरं हि।
व्याप्तं त्वयैकेनदिशश्च सर्वाः॥
दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं।
लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥

हे महात्मन्! हि पूत्यक्तं त्वया भवता एकेन केवलेन इदं द्यावापृथिव्योः आकाशपृथिव्योः अन्तरं अन्तरिक्षं मध्यं व्याप्तं पुनः सर्वाः दिशश्च व्याप्ताः अतस्तवेदं अभूतं अलौकिकं उग्रं क्रूरँ रूपँ दृष्ट्वा लोकत्रयँ व्यथितँ पूकर्षणभीतँ पश्यामि २०॥

हे महात्मन्, यह आकाश और पृथिवी के बीच का सारा अन्तर तथा सारी दिशायें एक आपसेही परिपूर्ण हैं आपके इस अद्भुत और उग्र रूप को देखकर तीनों लोक अति भयभीत हो रहे हैं॥ २०॥

अमी हि त्वां सुरसंघा विशंति।
केचिद्भीताः प्रांजलयो गृणंति॥
स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः।
स्तुवंति त्वां स्तुतिभिः पुष्कलाभिः २१॥

अमी हि दृश्यमानाः सुरसंघाः देवसमूहाः त्वां विशन्ति प्रविशन्तो दृश्यन्ते केचिद्व अपरे भीताः भयभीताः प्राञ्जलयः बद्धाञ्जलिपुटाः सन्तो गृणन्ति अन्ये महर्षिसिद्धसंघाः स्तुवन्ति महर्षीणां सिद्धानांचसंघाः समूहाः जगतः स्वत्यस्तु इत्युक्त्वा पुष्कलाभिः बहुभिः स्तुतिभिः स्तवनैः स्तुवन्ति ॥ २१ ॥

ये देवताओं के समूह आपमें ही प्रवेश करते हैं, कितनेक भय भीत होकर हाथ जोडे हुए आप की प्रार्थना करते हैं तथा महर्षि और सिद्धोंके समुदाय 'स्वस्ति, स्वस्ति" ऐसा कहकर अनेक स्तोत्रोंसे आपकी स्तुति करते हैं ॥२१॥

रुद्रादित्या वसवो ये च साध्या ।
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥
गंधर्वयक्षासुरसिद्धसंघा ।
वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥२२.

एकादशरुद्राः द्वादशादित्याः [ भास्कराः ] अष्टौवसवः साध्या रुद्रादयोगणाः विश्वेऽश्विनौ च अश्विनीकुमारमरुतौ ऊष्मपाः पितरश्च गन्धर्वा हाहाहूहूप्रभृतयः यक्षाः कुबेरादयः असुराः विरोचनादयः सिद्धाः कपिलादय स्तेषां संघाः समूहा

एते सर्वे विस्मिताः विस्मयमापन्नाः सन्तः त्वां वीक्षन्ते पश्यन्ति ॥ २२ ॥

रुद्र, आदित्य- वसु, साध्य, विश्वदेव, अश्विनीकुमार वायु पितर, गन्धर्व, यक्ष, असुर और सिद्धगणोंके जो समुदाय हैं; वे सबही विस्मित होकर आपको देखते हैं ॥२२॥

रूपं महत्तेबहुवक्त्रनेत्रं ।
महाबाहो बहुबाहूरुपादम् ॥
बहूदरं बहुदंष्ट्राकरालं ।
दृष्ट्वालोकाः प्रव्यथितास्तथाऽहम् ॥२३

हे महाबाहो ! बहवो बाहवः ऊरवः पादाश्च यस्मिन् रूपे तद्ध बहुबाहूरुपादं बहूनि असंख्यातानि उदराणि यस्मिन्निति बहूदरं बह्वीभि दंष्ट्राभिः करालं भयानकं इति बहुदंष्ट्राक रालं ईदृशं ते महद्ध रूपं दृष्ट्वा विलोक्य लोकाः प्राणिनः प्रव्यथिताः पीडां प्राप्ताः तथा अहमपि व्यथितः पीडां प्राप्तः ॥ २३ ॥

हे महाबाहो, आपके यह बहुत मुखवाले बहुत नेत्रोंवाले, बहुत हाथ जंघा और पैरोंवाले, बहुत उदरवाले और बहुतसी विकराल डाढोंवाले महान् रूपको देखकर सारे लोक व्याकुल हो रहे

है तथा मैं भी हुआ हूं ॥२३॥

नभः स्पृशं दीप्तमनेकवर्णं ॥
व्यात्ताननंदीप्तविशालनेत्रम् ।
दृष्ट्वा ही त्वां प्रव्यथितांतरात्मा ॥
धृतिं न विंदामि शमं च विष्णो ॥२४

हे विष्णो ! नभ आकाशं स्पृशतीति नभः स्पृशं व्योम व्यापिनं दीप्तं अग्निवज्जाज्वल्यमानं अनेके वर्णाः यस्मिन् तमनेकवर्णं नानारूपं व्यात्तानि विवृतानि आननानि मुखानि यस्मिन् तं व्यात्ताननं विस्तारितमुखं दीप्तानि-प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिन् तं दीप्तविशालनेत्रं [ रक्तनेत्रं ] त्वां भवन्तं दृष्ट्वा विलोक्य हि निश्चयेन प्रव्यथितः पीडितः अन्तरात्मा यस्य स व्यथितान्तरात्मा धृतिं धैर्यं न विन्दामि न लभे शमं च शान्तिं च न लभे ॥ २४ ॥

हे विष्णो, आपको आकाश के साथ स्पर्श किये हुए, अनेक वर्णवाले, मुखको फैलाये हुए, और प्रकाशमान विशाल नेत्रोंवाले देखकर मेरा अंतरात्मा व्यथित हुआ है; मैं धीरज और शान्तिको नहीं देखता ॥२४॥

दंष्ट्राकरालानि च ते मुखानि ।
दृष्ट्वैव कालानलसंनिभानि ॥
दिशो न जाने न लभे च शर्म ।
प्रसीद देवेश जगन्निवास ॥२५॥

हे जगन्निवास ! हे देवेश ! दंष्ट्राभिः करालानि भयंकराणि कालानलसंनिभानि कालानलः प्रलयाग्निस्तत्तुल्यानि ते तव मुखानि दृष्ट्वा विलोक्य भयात् दिशो न जाने शर्म सुखं च न लभे न विन्दामि प्रसीद मां प्रति प्रसन्नो भव ॥ २५

आपके विकराल डाढ़ोंवाले और प्रलयकालके अग्नि जैसे प्रज्वलित मुखोंको देखकर मैं दिशाओंको नहीं जान सकता और सुख कोभी नहीं प्राप्त होता हूं; इसलिये हे जगन्निवास, हे देवों के ईश, आप प्रसन्न होवें ॥२५॥

अमी च त्वां धृतराष्ट्रस्य पुत्राः ।
सर्वे सहैवावनिपालसंघैः ॥
भीष्मो द्रोणः सूतपुत्रस्तथासौ ।
सहास्मदीयैरपि योधमुख्यैः ॥२६॥

अमी परिदृश्यमानाः सर्वे धृतराष्ट्रस्य पुत्राः अवनिपाल संघैः जयद्रथादिसमूहैः सह भीष्मः द्रोणः तथा असौ सूतपुत्रः कर्णश्च अस्मदीयैरपि योधमुख्यैः योधप्रधानैः सह त्वां प्रविशन्ति ॥ २६ ॥

धृतराष्ट्रके वे सबही पुत्र राजाओंके समुदाय सहित आपमें प्रवेश करते हैं; तथा भीष्म, द्रोण, कर्ण और हमारे पक्षवाले भी मुख्य योद्धाओंके सहित ॥२६॥

वक्त्राणि ते त्वरमाणा विशंति।
दंष्ट्राकरालानि भयानकानि।
केचिद्विलग्ना दशनांतरेषु।
संदृश्यंते चूर्णितैरुत्तमांगैः॥२७॥

ते पूर्वोक्ताः अन्ये त्वरमाणाः वेगवत्तराः सन्तो दंष्ट्राभिः करालानि अतिघोराणि अतएवभयानकानि ते तव मुखानि विशन्ति तथा केचित् चूर्णितैः चूर्णीकृतैः उत्तमाङ्गैः शिरोभिः दशनान्तरेषु दन्तच्छिद्रेषु विलग्नाः लम्बायमानाः संदृश्यन्ते २७

सबके सब त्वरा सेआपके विकराल डाढों वाले भयानक मुखोंमें प्रवेश करते हैं; तथा कइ एक तो आपके दांतों के बीच

दीप्तयः तेजोभिः स्फुरत्कान्तिभिः समग्रं सम्पूर्णं जगत् आपूर्य संव्याप्य प्रतपन्ति सन्तापयन्ति ॥ ३० ॥

प्रज्वलित मुखोंकरके पकड़े हुए समग्र लोगोंको चारों ओरसे आप चाट रहे हैं, और हे विष्णो, आपका उग्र प्रकाश सारे जगतको तेजसे भरपूर करके तपा रहा है ॥३०॥

आख्याहि मे को भवानुग्ररूपो।
नमस्तु ते देववर प्रसीद॥
विज्ञातुमिच्छामि भवन्तमाद्यं।
नहि प्रजानामि तव प्रवृत्तिम् ॥३१॥

भवान् त्वं पूर्वरूपेण परिदृश्यमान उग्ररूपः क्रूरकर्मा कः कोऽसीति मे मह्यं आख्याहि अमुकोऽस्मि इति कथय हे देववर देवश्रेष्ठ ते तुभ्यं नमोऽस्तु प्रसीदः प्रसन्नोभव आदौ भवं आद्यं भवन्तं श्रीमन्तं त्वां विज्ञातुं विशेषेण ज्ञातु मिच्छामि वाञ्छामि तव भवतः वासुदेवस्य प्रवृत्तिं चेष्टां हीति निश्चयेन न प्रजानामि नावबुद्धये ॥ ३१

आप ऐसे उग्ररूपवाले कौन हैं सो मुझे कहिये हे देवश्रेष्ठ, आपको नमस्कार होवे, आप प्रसन्न होइये सबके आदि स्वरूप आप

को मैं विशेष जानना चाहता हूं, क्योंकि आपकी इस प्रवृत्तिका हेतु मैं नहीं जानता हूं ॥३१॥

कालोऽस्मि लोकक्षयकृत्प्रवृद्धो ।
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे ।
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२

लोकानां क्षयं करोतीति लोकक्षयकृत् लोकविनाशकः प्रवृद्धः लोकान् भक्षयितुं प्रवृत्तः कालोऽस्मि कालनामा अस्मि इह अस्मिन् संग्रामे लोकान् समाहर्तुं भक्षयितुं प्रवृत्तः त्वां भवन्तं ऋते विनाऽपि ये प्रत्यनीकेषु शत्रुसैन्येषु योधाः शूराः भीष्मादयोऽवस्थिताः सन्ति ते सर्वे न भविष्यन्ति ( मरिष्यन्त्येवेति भावः ॥ ३२ ॥

मैं लोगोंका क्षय करनेवाला महान् काल हूं, इस समय इन लोगोंको नष्ट करनेके लिये प्रवृत्त हुआ हूं दोनों सेनाओंमें स्थित ये सब योद्धा तेरे विनाभी जीवित नहीं रहेंगे ॥३२॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व ।

जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् ॥
मयैवैते निहताः पूर्वमेव ।
निमित्तमात्रं भव सव्यसाचिन् ॥३३॥

हे सव्यसाचिन् ! सव्येन वामेन हस्तेन सचितुं संधातुं शीलं यस्य तादृशस्त्वं उत्तिष्ठ युद्धार्थं सज्जो भव यशः कीर्तिं लभस्व प्रापय शत्रून् अरीन् दुर्योधनादीन् जित्वा समृद्धं सम्पन्नं राज्यं भुङ्क्ष्व एते दुर्योधनादयः मया श्रीकृष्णेन पूर्वमेव त्वन्मारणात् पृथममेव निहिताः मारिताः अतस्त्वं निमित्तमात्रं भव ॥ ३३ ॥

इसलिये तू उठ यशको प्राप्त कर तथा शत्रुओंको जीतकर समृद्ध राज्यका उपभोग कर ये सब पहिलेसेही मेरे मारे हुए हैं. हे सव्यसाचिन्, तू केवल निमित्तमात्रही हो ॥३३॥

द्रोणं च भीष्मं च जयद्रथं च ।
कर्णं तथान्यानपि योधवीरान् ॥
मया हतांस्त्वं जहि मा व्यथिष्ठा ।
युद्ध्यस्व जेताऽसि रणे सपत्नान् ॥३४॥

ब्राह्मणमपि द्रोणं भक्तमपि भीष्मं प्राप्तवरं जयद्रथं करणं कुन्तीपुत्रं तथा तथैव अन्यान् अपि योधवीरान् युद्धविशारदान् मया श्रीकृष्णेन हतान् मारितान् त्वं जहि नाशय मा व्यथिष्ठा एते महान्तः कथं हन्तुं शक्या इत्याकुलीभावं मागाः अतो निःशंकं शंकारहितं युद्धयस्व युद्धं कुरु रणे संग्रामे सपत्नान् शत्रून् जेतासि जेष्यसि ॥ ३४ ॥

द्रोण, भीष्म, जायद्रथ, कर्ण तथा अन्यभी मेरे मारे हुए वीर योद्धाओंको मार. खेद मत कर. युद्ध कर रणमें तू शत्रुओंको जीतेगा॥३४॥

सजय उवाच ।

एतद्श्रुत्वा वचनं केशवस्य ।
कृतांजलिर्वेपमानः किरीटी ॥
नमस्कृत्वा भूय एवाह कृष्णं ।
सगद्गदं भीतभीतः प्रणम्य ॥ ३५॥

किरीटी अर्जुनः एतदाश्रितवात्स्यलजलधेः केशवस्य श्रीकृष्णस्य वचनं वाक्यं श्रुत्वा आकर्ण्य तस्मै श्रीकृष्णाय नमस्कृत्य नमस्कारं कृत्वा भीतभीतः अत्यन्तंभयाविष्टचेताः भूयः

पुनरपि तं वासुदेवं प्रणम्य प्रणामं कृत्वा कृताञ्जलिः बद्धाञ्जलिः वेपमानः कम्पमानः सन् सगद्गदं प्रेमोपरुद्धकण्ठं यथास्यात् तथा आह विज्ञप्तिं कृतवान् ॥ ३५ ॥

केशवके इस वचनको सुन मुकुटधारी अर्जुन हाथ जोड़े हुए कांपता हुआ नमस्कार करके तथा भयभीत हुआ फिरभी प्रणाम करके भगवान् श्रीकृष्णके प्रति गद्गद् वाणीसे बोला ॥३५॥

श्रीभगवान् उवाच

स्थाने हृषीकेश तव प्रकीर्त्या।
जगत्प्रहृष्यत्यनुरज्यते च ॥
रक्षांसि भीतानि दिशो द्रवंति।
सर्वे नमस्यंति च सिद्धसंघाः ॥३६॥

हे हृषिकेश ! सर्वेन्द्रियप्रवर्तक तव भवतः प्रकीर्त्या गुण संकीर्तनेन जगत् प्रहृष्यति प्रहर्षमुपैति अनुरज्यते च अनुरागं प्राप्नोति भीतानि भयाविष्टानि रक्षांसि निशाचराणि दिशः द्रवन्ति दिक्षु पलायन्ते सर्वे संपूर्णाः सिद्धानां संघाः सिद्धसंघाः सिद्धसमूहाः नमस्यन्ति नमस्कारं कुर्वन्ति स्थाने युक्तमेव ॥ ३६ ॥

हे हृषीकेश आपके प्रभावके कीर्तनसे जगत् अति हर्षित होता है तथा आपमें अनुराग करता है, राक्षसलोग भयभीत हुए दिशाओं में भागते हैं और सिद्धोंके सारे समुदाय आपको नमस्कार करते हैं, यह योग्यही है ॥३६॥

कस्माच्च ते न नमेरन्महात्मन् ।
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ॥
अनंत देवेश जगन्निवास ।
त्वमक्षरं सदसत्तत्परं यत् ॥३७॥

हे महात्मन् ! महतामात्मस्वरूप ! यतः गरीयसे गुरवे ब्रह्मणोऽपि आदिकर्त्रे जनकाय ते तुभ्यं कस्मात् हेतोः ब्रह्मादयः देवाः न नमेरन् न नमस्कारं कुर्युः हे अनन्त ! हे देवानां ईश हे जगतामाधारभूत अक्षरं अविनाशी सत् असच्च सदसती ताभ्यां परं च सदसत्परं कार्यं कारणं तदुभयातीतं त्वमेव चासीत् ॥ ३७ ॥

हे महात्मन्, आप सबसे महान् और ब्रह्माकेभी आदिकर्ताको यह सब नमस्कार क्यों नहीं करें ? क्योंकि हे देवेश, हे जगन्निवास, जो कुछ सत्-असत् और उन दोनों से परे अक्षर ब्रह्म है, यह सब आपही हैं ॥३७॥

त्वमादिदेवः पुरुषः पुराण ।
　　स्त्वमस्य विश्वस्य परं निधानम् ॥
वेत्ताऽसि वेद्यं च परं च धाम ।
　　त्वया ततं विश्वमनंतरूप ॥३८॥

त्वं जगतः आदिदेवः आदिकारणं पुराणः चिरंतनः पुरुषः त्वं अस्य परिदृश्यमानस्य विश्वस्य परमुत्कृष्टं निधानं लयस्थानं सर्वस्य ज्ञातुं योग्यस्य वेत्ताऽसि ज्ञाताऽसि वेद्यं वेद नाहं असि परं उत्कृष्टंधाम प्राप्यस्थानं हे अनन्तस्वरूप अनेकरूप ? त्वया इदं परिदृश्यमानं विश्वं ततम् व्याप्तम् ॥३८॥

आप आदिदेव और सनातन पुरुष हैं, आप इस विश्व के परम आश्रय; जाननेवाले, जानने योग्य और परम धाम हैं हे अनंरूप, आप करकेही यह सारा विश्व भरा हुआ है ॥३८॥

वायुर्यमोऽग्निर्वरुणः शशांकः ।
　　प्रजापतिस्त्वं प्रपितामहश्च ॥
नमो नमस्तेऽस्तु सहस्रकृत्वः ।
　　पुनश्च भूयोऽपि नमो नमस्ते ३९

वायुः सर्वप्राणरूपः यमः यमराजः अग्निः वह्निः वरुणः जलाधिपः शशाङ्कः चन्द्रः प्रजापतिः ब्रह्मा प्रपितामहः ब्रह्मणः पिता च त्वमेवासि सहस्रकृत्वः सहस्रशः ते तुभ्यं नमोनमोऽस्तु पुनश्च भूयोऽपि ते तुभ्यं नमोनमोऽस्तु भवतु ॥ ३९ ॥

आप वायु, यम, अग्नि, वरुण, चंद्र ब्रह्मा और ब्रह्माकेभी पिता हैं आपको हजारों बार नमस्कार हो, नमस्कार हो, और पुनः पुनः भी आपको नमस्कार हो, नमस्कार हो, ॥३९॥

नमः पुरस्तादथ पृष्ठतस्ते ।
नमोऽ तु ते सर्वत एव सर्व ॥
अनंतवीर्यामितविक्रमस्त्वं ॥
सर्व समाप्नोपि ततोऽसि सर्वः ॥४०॥

हे सर्वात्मन् ! पुरस्तात् पूर्वस्यां दिशि नमोऽस्तु अथपृष्ठतः पश्चादपि ते तुभ्यं नमोऽस्तु भवतु सर्वत एव सर्वासु दिक्षु एव नमोऽस्तु हे अनन्तवीर्य हे अनन्तसामर्थ्य अमितो बहुतरः पराक्रमो विक्रमो यस्य सोऽमितविक्रमस्त्वमसि सर्व समस्तं जगत समाप्नोपि सम्यगेकेनात्मना व्याप्नोपि तत स्तस्मात् सर्वः सर्वरूपस्त्वं असि भवसि ॥ ४० ॥

हे सर्वात्मा, आपको आगेसे नमस्कार हो, पीछेसे नमस्कार हो, तथा सब ओरसेही नमस्कार हो. हे अनंत सामर्थ्यवाले, आप अपार पराक्रमशाली और सारे संसारको व्याप्त किये हुए हैं, इस वास्ते आपही सर्वरूप हैं ॥४०॥

सखेति मत्वा प्रसभं यदुक्तं ।
　　हे कृष्ण हे यादव हे सखेति ॥
अजानता महिमानं तवेदं ।
　　मया प्रमादात्प्रणयेन वापि ॥४१॥

तव भवतः इदं पूर्वदर्शितं महिमानं महात्म्यं अजानता अज्ञातवता अज्ञानिना मूढेन मया अर्जुनेन प्रमादात् अनवधानात् प्रणयेन वापि अथवा स्नेहेन सखेति मत्वा मम मित्र इति मत्वा हे कृष्ण ! हे यादव ! हे सखेति ! प्रसभं बलात्कारेण यदुक्तं कथितं तत् क्षामये क्षमां कारये ॥ ४१ ॥

आपकी इस महिमाको न जानते हुए मैंने सखा मानकर प्रमाद से किंवा प्रेमसेभी 'हे कृष्ण, 'हे यादव, 'हे सखे, ऐसा जो कुछ अनादरपूर्वक कहा है, ॥४१॥

यच्चावहासार्थमसत्कृतोऽसि ।

विहारशय्यासनभोजनेषु ॥
एकोऽथवाप्यच्युत तत्समक्षं ।
तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

विहारश्च शय्या च आसनं च भोजनं च तानि विहार शय्यासनभोजनानि तेषु क्रीडासु शय्यायां एकासने सह भोजने च यदवहासार्थं परिहासप्रयोजनाय एक एकाकी तत्समक्षं सखिजन समक्षं वा असत्कृतोऽसि अवमानितोऽसि हे अच्युत! हे कृष्ण ! तत् सर्वमपराधं अप्रमेयं अचिन्त्य स्वभावं त्वां अहमर्जुनः क्षामये क्षमांकारये ॥ ४२ ॥

और अच्युत आहारविहारमें, उठने-बैठने में, एकान्तमे किंवा किसीके सामने उपहासके लियेभी आपको जो कुछ अपमानित किये हैं, वह सब हे अनत महिमावाले, आपसे क्षमा कराता हूं ॥४२॥

पितासि लोकस्य चराचरस्य ।
त्वमस्य पूज्य गुरुर्गरीयान् ॥
न त्वत्समोऽस्त्यभ्यधिकःकुतोऽन्यो ।
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

अस्य परिदृश्यमानस्य चराचरस्य स्थावरजङ्गमात्मकस्य लोकस्य जगतः त्वं पिता परिपालकः पूज्यः पूजार्हः गुरुः गरीयान् चासि हे अप्रमितप्रभाव उपमारहितानुभाव ! लोकत्रयेऽपि सम्पूर्णजगति त्वत्समस्तत्तुल्यः अन्योनास्ति त्वदधिक कुतो भवेत् येन त्वं तत्समः स्याः ॥ ४३॥

हे अतुल प्रभाववाले, आप इस चराचर जगतके पिता, पूजनीय और गुरुकेभी गुरु हैं तीनों लोकोंमें आपके तुल्यही अन्य कोई नहीं है; तब अधिक कैसे होगा ॥४३॥

तस्मात्प्रणम्य प्रणिधाय कायं ।
प्रसादये त्वामहमीशमीड्यम् ॥
पितेव पुत्रस्य सखेव सख्युः ।
प्रियः प्रियायार्हसि देव सोढुम्॥ ४४

तस्मात्कारणात् ईशं ईशितारं ईड्यं स्तुत्यं त्वां श्रीकृष्णं कायं शरीरं प्रणिधाय दण्डवत् पतित्वा अहं प्रसादये प्रसादयामि हे देव ! पुत्रस्य पिता इव सख्युः मित्रस्य सखा इव मित्र मित्र प्रियायाः भार्यायाः प्रिय इव पतिरिव ( अपराधं ] सोढुं सहनकर्तुं अर्हसि योग्योऽसि ॥ ४४ ॥

इसलिये कायासे साष्टाग प्रणाम करके आप स्तुत्य ईश्वरको प्रसन्न होनेके लिये मैं प्रार्थना करता हूं, हे देव, जैसे पिता पुत्रके, मित्र मित्रके, और प्रिय प्रियके अपराध सह लेता है, वैसे आपभी मेरे अपराध सह लीजिये ॥४४॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा ।
भयेन च प्रव्यथितं मनो मे ॥
तदेव मे दर्शय देव रूपं ।
प्रसीद देवेश जगन्निवास ॥४५॥

अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वं उत्युद्भुतं उग्रं च तव रूपं दृष्ट्वा विलोक्य हृषितोऽस्मि हर्षं प्राप्तोऽस्मि मे मम अर्जुनस्य मनः चेतः भयेन व्यथितं व्यथां प्राप्तं हे देव ! अतस्तदेव शान्तं रूपं मे मह्यं दर्शय अवलोकय हे देवेश ! हे जगन्निवास ! प्रसीद प्रसन्नो भव ॥ ४५ ॥

आपके इस अदृष्टपूर्व विराट्रूपको देखकर मैं आनंदित भी हुआ हूं और भयसे मेरा मन व्याकुल भी खूब हो रहा है, इसलिए हे देव, अपना वह चतुर्भुजरूप ही मुझे दिखाइये, और हे देवेश, हे जगन्निवास, प्रसन्न हूजिये ॥४५॥

किरीटिनं गदिनं चक्रहस्त ।

मिच्छामि त्वां द्रष्टुमहं तथैव ॥
तेनैव रूपेण चतुर्भुजेन ।
सहस्रबाहो भव विश्वमूर्ते ॥४६॥

किरीटिनं मुकुटवन्तं गदिनं गदावन्तं चक्रहस्तं चक्रकरं तथैव पूर्ववदेव अहमर्जुनः त्वां भगवन्तं द्रष्टुं अवलोकयितुं इच्छामि वांच्छामि अतः हे सहस्रबाहो ? हे सहस्रभुज ! विश्व मूर्ते तेनैव पूर्वोक्तदर्शितेन चतुर्भुजरूपेण प्रकटो भव ॥ ४६ ॥

आपको मैं वही मुकुटधारी गदाधारी तथा हाथ में चक्र लिये हुए रूपमें देखना चाहताहूं; इसलिये हे हजार हाथवाले, हे विश्वमूर्ते आप उस चतुर्भुज रूपसे प्रकट हूजिये ॥४६॥

श्रीभगवान् उवाच ॥

मया प्रसन्नेन तवार्जुनेदं ।
रूपं परं दर्शितमात्मयोगात् ॥
तेजोमयं विश्वमनंतमाद्यं ।
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥

हे अर्जुन ! प्रसन्नेन प्रसादयुक्तेन मया श्रीकृष्णेन आत्म योगात् स्वसामर्थ्यात् तव भवतः इदं यत् मे मम आद्यं सनातनं अनन्तं अन्तरहितं तेजोमयं प्रकाशमयं परमुत्कृष्टं विश्वं विश्वा त्मकं रूपं दर्शितं भवद्दृष्टिगोचर तामापादितं त्वदन्येन त्वां विना दृष्टपूर्वं पूर्वं केनापि नात्र लोककृतम् ॥ ४७॥

हे अर्जुन, मैंने प्रसन्नतापूर्वक अपने योगसामर्थ्यसे तुझे जो अपना यह परम तेजोमय, सबका आदि, तथा अंतरहित विश्वरूप दिखलाया, सो तेरे सिवाय दूसरेने नहीं देखा ॥४७॥

न वेदयज्ञाध्ययनैर्न दानैः ।
न च क्रियाभिर्न तपोभिरुग्रैः ॥
एवंरूपः शक्य अहं नृलोके ।
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥

हे कुरुप्रवीर ! भरतकुलवीर ! न वेदयज्ञाध्ययनैः न वेदपठनैः न यज्ञज्ञानैः न च दानैः तुलापुरुषादिभिः न च अग्निहोत्रादि क्रियाभिः न उग्रैः कठोरैः चान्द्रायणादिभिः तपोभिः नृलोके मनुष्यलोके एवं रूपः पूर्वोक्तदर्शितरूपः अहं पुरुषोत्तमः त्वदन्ये त्वां अपहाय अन्येन त्वद्भिन्नेन द्रष्टुं पूर्वोक्तैः साधनैरपि न शक्यः न

समर्थः ॥ ४८ ॥

हे कुरुकुलके वीरश्रेष्ठ, मनुष्य लोकमें मेरा इस प्रकारका रूप वेद और यज्ञोंके अध्ययनसे दानसे क्रियाओंसे किंवा उग्र तपोंसेभी तेरे सिवाय दूसरा नहीं देख सकता ॥४८॥

मा ते व्यथा मा च विमूढभावो ।
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ॥
व्यपेतभीः प्रीतमनाः पुनस्त्वं ।
तदेव मे रूपमिदं प्रपश्य ॥४९॥

ममेदं ईदृक् घोरं भयानकं रूपं स्वरूपं दृष्ट्वा अवलोक्य तव अर्जुनस्य व्यथा पीडा माभूद् विमूढभावः विमूढचित्तता मोहश्च ते तव माभूत् पुनस्त्वं व्यपेतभीः विगत भयः प्रीतमनाश्च भूत्वा तदेव पार्थिर्स मे मम इदं चतुर्भुजं रूपं प्रपश्य ॥४९॥

इस प्रकारके मेरे इस भयंकर रूपको देखकर तुझे व्याकुलता और विमूढता न होवे भयरहित और प्रसन्न चित्तवाला होकर तू पुनः मेरे इस उसी चतुर्भुज रूपको देख ॥४९॥

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा ।

स्वकं रूपं दर्शयामास भूयः।
आश्वासयामास च भीतमेनं।
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

वासुदेवः अर्जुनं प्रति इति पूर्वोक्तप्रकारेण उक्त्वा कथित्वा यथा पूर्व मासीत् तथा स्वकं मानुषं रूपं भूयः पुनः दर्शयामास दर्शितवान् तथा महात्मा व्यापकः विभुः सौम्यवपुः प्रसन्नदेहो भूत्वा भीतं भयाविष्टं एनं अर्जुनं पुनः भूयः आश्वासयामास आश्वासितवांश्च ॥ ५० ॥

ऐसा कहकर भगवान् वासुदेवने अर्जुनको फिर अपना वैसेही रूप दिखाया, और महात्मा श्रीकृष्णने फिर सौम्यमूर्ति होकर इस भय भीत हुए अर्जुनको धीरज दिया ॥५०॥

अर्जुन उवाच।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः॥ ५१ ॥

हे जनार्दन ! हे अविद्यानाशक ! इदं, पुरतो दृश्यमानं मानुषं मनुष्यैः द्रष्टुं योग्यं सौम्यं दयायुक्तं तव भगवतः रूपं

दृष्ट्वा विलोक्य इदानीं अधुना सचेताः सावधानचित्तः संवृतः जातोऽस्मि प्रकृतिं पूर्ववत्स्वभावं गतश्चास्मि ॥ ५१ ॥

हे जनार्दन, आपके इस सौम्य मानवरूपको देखकर अब मैं स्वस्थ चित्त हुआ हूं तथा अपने स्वभावको प्राप्त हुआ हूं ॥५१॥

श्रीभगवान् उवाच

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२

इदं परिदृश्यमानं मम भगवतः रूपं सुदुर्दर्शं दुःखेनाऽपि द्रष्टुमशक्यं यत् त्वं अर्जुनः दृष्टवानसि अस्य रूपस्य देवा अपि अमरा अपि नित्यं दर्शनकाङ्क्षिणः दर्शनेच्छवस्तिष्ठन्ति नतु दर्शनं लभन्ते इति भावः ॥ ५२ ॥

यह जो मेरा रूप तूने देखा है; यह देखना अत्यंत दुर्लभ है. देवता भी इस रूपके दर्शनकी सदा इच्छावाले हैं ॥५२॥

नाहं वेदैर्न तपसा न दानेन नचेज्यया ।
शक्य एवंविधो द्रष्टुंदृष्टवानसि मां यथा ॥५३॥

यथा येनप्रकारेण त्वं अर्जुनः मामीश्वरं दृष्टवानसि अद्राक्षीः तथा न चतुर्भिः वेदैः वेदाध्ययनैः न तपसा तपोबलेन न हिरण्यादिदानेन न इज्यया यज्ञेन एवंविधः यथादर्शितप्रकारः द्रष्टुं अवलोकयितुं न शक्यः न समर्थः ॥ ५३ ॥

तूने जैसा मुझको देखा है; इस प्रकारका मैं न वेदोंसे, न तपसे, न दान से, और न यज्ञसे देखा जानेको शक्य हूं ॥५३॥

भक्त्या त्वनन्यया शक्यअहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४॥

हे परन्तप अर्जुन! एवंविधः विश्वरूप प्रकारः अहमीश्वरः अनन्यया अखण्डया भक्त्या भक्तिभावेन तत्त्वेन तत्वतः ज्ञातुं अवबोद्धुं द्रष्टुं च साक्षात् कर्तुं च प्रवेष्टुं प्रवेशनार्थं च शक्यः समर्थः ॥ ५४ ॥

हे उत्तम तपवाले अर्जुन ! केवल अनन्य भक्तिसेही इस प्रकारका मैं तत्त्वसे जाननेको, देखनेको और प्रवेश करनेको शक्य हूं ॥५४॥

मत्कर्म कृन्मत्परमो मद्भक्तः संगवर्जितः ।

निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥ ५५॥

हे पाण्डव ? हे ! पाण्डुपुत्र मद्भक्तः ममाराधकः मदर्थ मेव कर्माणि करोतीति मत्कर्मकृत् अहमेव परः परागतिर्यस्य स मत्परः सङ्गवर्जितः धनपुत्रादिषु प्रीतिरहितः सर्वभूतेषु सर्वप्राणिषु निर्वैरः विगतवैरः मामीश्वर मेव प्राप्नोति ॥ ५५ ॥

हे पाण्डव, जो मेरा भक्त मेरी प्रीतिके ही अर्थ कर्म करने वाला, मेरे परायण रहनेवाला अन्य सारे पदार्थोंसे आसक्ति छोड़नेवाला और सारे भूतोंसे वैर रहित है, वही मुझे प्राप्त होता है ॥५५॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः ॥११॥

# द्वादशोऽध्यायः ।

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
येचाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥

एवं अनेनप्रकारेण सततयुक्ताः नित्यं समाहितचित्ता ये भक्ताः भक्तजनाः दर्शितविश्वरूपं त्वां भवन्तं पर्युपासते ध्यायन्ति येचाऽपि संन्यस्तकर्माणः त्यक्तसर्वैषणाः अक्षरं ब्रह्माक्षरं निरस्तसर्वोपाधित्वात् अव्यक्तं अकरणगोचरं ,पर्युपासते भजन्ति तेषां मध्ये के पुरुषाः योगवित्तमा अतिशयेन योगविदो भवन्ति ॥ १ ॥

इस (पूर्वोक्त) प्रकार से निरन्तर आपकी भक्ति में लगे हुए जो भक्त आपके सगुण रूपकी उपासना करते हैं और जो भक्त आप के अविनाशी तथा अव्यक्त ( निराकार-गुणातीत ) स्वरूप को ही भजते हैं, उसमें उत्तम योगवेत्ता कौन है ॥१॥

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥

ये इतरे परया प्रकृष्टया श्रद्धया आस्तिक्यबुद्ध्या उपेताः युक्ताः मयि विश्वरूपे परमेश्वरे मनः आवेश्य समाधाय( संवेश्य) नित्ययुक्ताः मत्सेवैकतत्पराः सन्तः मामीश्वरं उपासते चिन्तयन्ति ते पुरुषाः मे ममेश्वरस्य युक्ततमाः उत्तमयोगिनः ( श्रेष्ठाः ) मताः अभिप्रेताः ॥ २ ॥

निरन्तर मेरी साधना में लगे हुए जो भक्त मन को मुझ में जोड़ कर परम श्रद्धा सहित मुझ को उपासते हैं; वे मुझ को उत्तम योगी मान्य हैं ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥३॥
संनियम्यैंद्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवंति मामेव सर्वभूतहिते रताः ॥४॥

सर्वत्र सर्वस्मिन् काले इष्टाऽनिष्टप्राप्तौ समा तुल्या बुद्धिर्येषां ते समबुद्धयः सर्वेभ्यः सम्पूर्णेभ्यः भूतेभ्यः प्राणिभ्यः हिते

रताः हितमेव चिन्तयन्तः इन्द्रियग्रामं इन्द्रियसमूहं सं नियम्य वशीकृत्वा ये अनिर्देश्यं अशब्दगोचरं (वक्तुमशक्यं अव्यक्तं प्रमाणेनापि प्रकटयितुमशक्यं सर्वत्रगं व्योमवत्सर्वत्र व्याप्यं अक्षरं अविनाशिनं अचिन्त्यं मनसाऽपि चिन्तयितुमशक्यं कूटस्थं साक्षिमन्तं अचलं ध्रुवं नित्यं मामीश्वरं पर्युपासते ध्यायन्ति ते तु मामेव ईश्वरमेव प्राप्नुवन्ति मामेवलीनाः भवन्ति ॥३,४॥

जो इन्द्रियों के समूह को नियम में लाकर अक्षर, अकथनीय, अव्यक्त, सर्वव्यापी, अचिन्त्य, अविकारी, अचल और अविनाशी परब्रह्म को भजते हैं; वे संपूर्ण भूतों के हित में रत तथा सब में समबुद्धिवाले योगी भी मुझको ही प्राप्त होते हैं।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।

अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

यद्यपि अव्यक्ते अत्यन्तसूक्ष्मे अक्षरे ब्रह्मणि आसक्तं विशेषेण संलग्नं चेतो येषां तेषां अव्यक्तासक्तचेतसां तेषां जनानां अधिकतरः क्लेशः अत्यन्तक्लेशो भवति, तथापि देहवद्भिः देह धारिभिः अव्यक्ता अक्षरात्मिका गतिः अव्यक्तनिष्ठा गतिः दुःखं दुःखेन अवाप्यते प्राप्यते ॥ ५ ॥

परन्तु उन अव्यक्त में आसक्त चित्तवालों को परिश्रम अधि-

तर है; क्योंकि देहाभिमानियों को अव्यक्त का मार्ग दुःख से प्राप्त होता है ॥ ५ ॥

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायंत उपासते ॥ ६ ॥**

ये तु जनाः सर्वाणि सम्पूर्णानि लौकिकवैदिकानि कर्माणि मयीश्वरे संन्यस्य त्यागं कृत्वा मत्पराः अहमेव परः उत्कृष्टः प्राप्यो येषां तादृशाः सन्तः नैव अन्यो भजनीयो यस्मिन् तेन अनन्येन भेदशून्येन योगेन चेतः समाधानेन मामीश्वरं ध्यायन्तः मद्ध्यानं कुर्वन्तः उपासते सेवन्ते ॥ ६ ॥

और जो मेरे परायण पुरुष सारे कर्मों को मुझ में अर्पण करके मुझ सगुण को अनन्य योग से ध्यान करते हुए उपासते हैं ।

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७**

तेषां किं भवतीत्याह हे पार्थ ! हे राजन् ! मयि परमात्मनि आवेशितं प्रवेशितं समाहितं चेतो येषां तेषां आवेशितचेतसां मय्यर्पितमनसां तेषां मदुपासनैकपराणां मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागर इव सागर स्तस्मात् मृत्युसंसार

सागरात् मरणयुक्तसंसारसमुद्रात् नचिरात् शीघ्रमेवाहं समुद्धर्ता समुद्धरणकर्ता भवामि ॥ ७ ॥

उन मुझ में चित्त लगाने वालों का हे पार्थ मृत्यु रूप संसार सागर से मैं शीघ्र ही उद्धार करता हूं ॥७॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशय ॥८॥

यत एवं स्यात् तस्मात् मय्येव विश्वरूपे ईश्वरे संकल्प विकल्पात्मकं मनः चेतः आधत्स्व स्थापय मयीश्वरे एव बुद्धि पूर्ण निवेशय प्रवेशय अतः शरीरपातात् ऊर्ध्वं उपरि मयि परमात्मनि एव निवसिष्यसि निवासं करिष्यसि अत्र न संशयः न सन्देहः कर्तव्यः ॥ ८ ॥

इस लिये तू मनको मुझ में लगाता हुआ बुद्धि को भी मुझमें ही प्रविष्ट कर ऐसा करनेसे तू मुझमें ही निवास करेगा इसमें संशय नहीं है ॥८॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९॥

हे धनंजय अर्जुन ! अथ चेत् मयि परमात्मनि सहसैव स्थिरं चित्तं अचलं मनः समाधातुं निवेशितुं धारयितुं न शक्नो

पि न समर्थो भवसि ततः पश्चात् चित्तस्य सर्वतः समाहृत्यै कत्र स्थानं आभ्यासः स एव योगस्तेन अभ्यासयोगेन पुनः पुनः प्रतिमादौ चित्तसंविवेशेन मामीश्वरं प्राप्तुं इच्छ प्रयत्नपरो भव ॥९॥

यदि तू मुझमें चित्त स्थिर करने को समर्थ नहीं है तो हे धनंजय, अभ्यास रूप योग के द्वारा मुझको प्राप्त होने की इच्छा कर ॥९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥१०

अभ्यासेऽपि एकास्मिन् पुनः पुनः चित्तारोपणेऽपि यदि असमर्थः अशक्तोऽसि मत्कर्मपरमो भव भगवत् प्रीत्यर्थं कर्म मत्कर्मशब्दितं तदेव परम आवश्यकं यस्य तादृशो भव (भगवत् प्राप्ति हेतुकं कर्मकुरु) मदर्थं मत्प्रीत्यर्थं कर्माणि कुर्वन् विदधन्नपि ब्रह्मप्राप्तिरूपां सिद्धिं अवाप्स्यसि प्राप्स्यसि ॥१०॥

यदि अभ्यास करनेमेंभी असमर्थ है, तो मुझको सर्वश्रेष्ठ समझ मेरे लिये ही कर्म करनेवाला हो मेरे अर्थ कर्मोंको करता हुआ भी तू सिद्धिको प्राप्त होगा ॥१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥

अथ पुनः एतदपि [यदुक्तं मत्कर्मपरमत्वं] तत्कर्म कर्तुं विधातुं अशक्तः असमर्थोऽसि चेत् तर्हि तदनन्तरं यतात्मवान् संयत चित्तः मयि ईश्वरे सर्वकर्मपरित्यागरूपं योगं मद्योगं मनः संयमं आश्रितस्त्वं सर्वकर्मफलत्यागं सम्पूर्ण कर्मफलसंन्यासं कुरु विधेहि ॥११॥

यदि इसकोभी करनेमें असमर्थ है तो मेरी प्राप्तीका उद्देश रख कर मन इन्द्रियों को वशमें लाता हुआ सर्वकर्मों के फलका त्याग कर ॥११॥

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते।
ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥१२

हीति निश्चयेन स्मरणरूपात् अभ्यासात् ज्ञानं श्रेयः प्रशस्यतरः ज्ञानात् ध्यानं विशिष्यते अधिको भवति ध्यानात् कर्मफलत्यागः श्रेष्ठतरो भवति अनन्तरं पश्चात् शान्तिः अधिगम्यते ॥१२॥

क्योंकि ऐसी दशामें अभ्यासते ज्ञान, ज्ञानसे ध्यान, और ध्यान

अैकर्मफलका त्याग उत्तम है त्यागसे भी तत्काल शान्ति होती है ॥१२॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥१३॥

सर्वे च ते भूताः सर्व भूता स्तेषां सर्वभूतानां सर्वप्राणिनाँ अद्वेष्टा द्वेषरहितः मैत्रः प्रियकर्ता करुणः दयावांश्च निर्ममः मोहरहितः निरहंकारः निरभिमानी समे तुल्ये दुःख सुखे यस्य स समदुःख सुखः क्षमी क्षमावान् ॥१३॥

सारे भूतों में द्वेषरहित, सबका मित्र, दयालु, अहंता ममता से छूटा हुआ, सुख दुःख में समबुद्धिवाला, क्षमावान् ॥१३॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥१४

सततं सर्वदा सन्तुष्टः संतोषी योगी समाहितचित्तः यतात्मा वशीकृतात्मा दृढः स्थिरः निश्चयो यस्य स दृढनिश्चयः अतिश्रद्धावान् मयि ईश्वरे अर्पितं समर्पितं मनो बुद्धिर्येन स अर्पितमनोबुद्धिः यः मद् भक्तः मम सेवकः सः मे प्रियो भवति ॥१४॥

सर्वदा संतुष्ट योगयुक्त, मन इन्द्रियों को वशमें रखनेवाला,

दृढनिश्चय वाला, और मुझमें अर्पण किये हुये मन बुद्धिवाला, ऐसा मेरा भक्तमुझ को प्रिय है ॥१४॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५**

यस्मात् सकाशात् लोकः न उद्विजते उद्वेगं न करोति यश्च लोकात् न उद्विजते न त्रस्यति हर्षश्च अमर्षश्च भयं च उद्वेगश्च ते हर्षामर्षभयोद्वेगास्तैः हर्षामर्षभयोद्वेगैः मुक्तः रहितः सः मे मम प्रियो भवति ॥१५॥

जिससे लोगोंको उद्वेग नहीं होता, जो लोगोंसे उद्विग्न नहीं होता और जो हर्ष, ईर्षा, भय तथा खेद से मुक्त है वह मेरा प्रिय है ॥१५॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः १६॥**

अनपेक्षः निःस्पृहः शुचिः पवित्रः दक्षः प्रत्युत्पन्नमतिः उदासीनः सर्वेषु समः गता याता व्यथा यस्य स गतव्यथः गत भयः सर्वे च ते आरंभाः सर्वारम्भाः काम हेतुकानि कर्माणि तानि परित्यक्तुं शीलं अस्येति सर्वारम्भ परित्यागी सर्वकामना-

परित्यागी यः मद्भक्तः सः मे ममेश्वरस्य प्रियो भवति ॥१६॥

जो मेरा भक्त आकांक्षा रहित, कर्तव्य में दक्ष (चतुर), अन्य बातों से उदासीन, दुःखों से छूटा हुआ, और सारे (सकाम कर्मों) छोड़नेवाला है वह मेरा प्रिय है ॥१६॥

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥

यो जनः इष्ट प्राप्तौ न हृष्यति अनिष्ट अप्राप्तौ न द्वेष्टि द्वेषं करोति प्रिय वियोगे न शोचति शोकं करोति अप्राप्तं न कांक्षति अभिलषति शुभं च अशुभं च शुभाशुभे मंगलाऽमंगले परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी यः पुरुषः भक्तिमान् स मे मम प्रियो भवति ॥१७॥

जो भक्तिमान् पुरुष न हर्षित होता है, न द्वेष करता है न चिंता करता है, न आकांक्षा करता है, और जो शुभ अशुभ दोनों का परित्यागी है, वह मेरा प्रिय है ॥१७॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥१८॥

शत्रौ वैरिणि मित्रे प्रिये च समः तुल्यः तथा तथैव मानं च अपमानं च मानापमाने तयोः मानापमानयोः पूजापरिभवयोः समः तुल्यः शीतं च उष्णंच सुखं च दुःखं च तेषु शीतोष्ण सुखदुःखेषु समस्तुल्यश्च सर्वत्र संगवर्जितः आसक्ति रहितः स मे प्रियो जायते ॥१८॥

जो भक्तिमान् पुरुष शत्रु और मित्रमें, मान और अपमान में, शीत और उष्णमे, तथा सुख और दुःखमें समबुद्धिवाला है, जो संग (आसक्ति) को छोड़ चुका है ॥१८॥

तुल्यनिंदास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥

निन्दा च स्तुतिश्च निन्दास्तुती ते तुल्ये समं यस्य सः तुल्य निन्दास्तुतिः मौनी वशवाक् येन केन चित् शरीर स्थितिमात्रेण संतुष्टः संतोषी अनिकेतः आश्रयरहितः स्थिरमतिः स्थिरमनः यो भक्तिमान् नरः स मे ममेश्वरस्य प्रियं आसीत् ॥१६॥

जो निन्दा और स्तुतिको तुल्य माननेवाला, मननशील, जिस किसी प्रकारसे निर्वाह होनेमें संतुष्ट तथा स्थानरहित है ऐसा स्थिर बुद्धिवाला मेरा प्रिय है ॥१६॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥

किन्तु ये केचन भाग्यवन्तः इदं पुरतः उक्तं धर्मामृतं धर्मयुक्तममृतं मद् वचनामृतं यथोक्तं यथाकथितं श्रद्दधाना मदुक्तं सत्य मिति ज्ञानवन्तः मत्परमाः मदेकनिष्ठाः सन्तः मां सेवन्ते ते भक्ताः मे मम अतीव प्रिया भवन्ति ॥२०॥

जो मुझको ही सर्वश्रेष्ठ तथा सर्वस्व समझने वाले श्रद्धावान् पुरुष इस मेरे कहे हुए धर्ममय अमृतको यथावत् सेवन करते हैं वे भक्त मेरे अत्यन्त प्रिय हैं ॥२०॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥१२॥

# त्रयोदशोऽध्यायः ।

## क्षेत्रक्षेत्रज्ञविभाग योग ।

श्रीभगवान् उवाच

इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ।
एतंद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥१॥

हे कौन्तेय ! हे कुन्तीपुत्र ! इदं दृश्यमानं मरणादिधर्मयुक्तं शरीरं क्षेत्रं ज्ञानादिप्ररोहस्थानं इत्येवं अभिधीयते कथ्यते एतत् क्षेत्रं ( शरीरं ) यः पुरुषः वेत्ति विजानाति तं क्षेत्रवेदितारं तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति ते तद्विदः तज्ज्ञाः क्षेत्रज्ञ इति प्राहुः कथयन्ति ॥ १ ॥

हे कौंतेय ! यह शरीर 'क्षेत्र' कहा जाता है और इस क्षेत्रको जो जानता है उसको तत्त्वज्ञ लोग 'क्षेत्रज्ञ' कहते हैं ॥१॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥

हे भारत ! हे भरत कुलोत्पन्न ! सर्वक्षेत्रेषु सम्पूर्णक्षेत्र पदवाच्येषु शरीरेषु क्षेत्रज्ञं देहत्वावच्छिन्नावगन्तारं मामीश्वरं विद्धि जानीहि तस्मात् क्षेत्रक्षेत्रयोः ज्ञेयभूतयोः यज्ज्ञानं अत्र बोधः तदेव उत्कृष्टंज्ञानं ( सम्यग्ज्ञानम् नान्यत् ) इति मे ममे श्वरस्य मतं अभिप्रायः ॥ २ ॥

हे भारत, सारे क्षेत्रों में क्षेत्रज्ञ (आत्मा) मुझ को ही जान इस क्षेत्र और क्षेत्रज्ञका जो ज्ञान, उसीका नाम ज्ञान है यह मेरा मत है ॥२॥

तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्चयत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥३॥

एतावच्छब्दार्थान् भवन्तं प्रतिनिवेदयिष्यामि इत्याह भगवान् श्रीकृष्णचन्द्रः यच्चेदं निर्दिष्टं क्षेत्रं स्थूलशरीरं कीदृशं तत् यादृ

क्च यादृशं च यादृशैः स्वकीयै धर्मादिभिर्युक्तं च यद्विकारि येच तस्य विकाराः सन्ति यतश्च यस्माच्च यत्कार्य मुत्पद्यते तत् यः क्षेत्रज्ञः कथितः सश्च ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत्सर्व समासेन सक्षेपतः मे ममेश्वरस्य वाक्यतः शृणु आकर्णय ॥ ३ ॥

यह क्षेत्र जो कुछ है, जैसा है, जिन विकारों वाला है और जिससे उत्पन्न हुआ है तथा वह क्षेत्रज्ञ भी, जो कुछ है और जिस प्रभाव वाला है वह सब मुझसे संक्षेपमें सुन ॥३॥

**ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक्।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥४॥**

तत्क्षेत्रक्षेत्रज्ञोर्याथात्म्यं ऋषिभिः वसिष्ठादिभिः बहुधा बहु प्रकारं गीतं प्रतिपादितं छन्दोभिः वेदमन्त्रैः विविधैः नानाप्रकारैः प्रतिशाखं पृथक् पृथक् गीतं प्रतिपादितं हेतुमद्भिः युक्तियुक्तैः विनिश्चितैः निश्चितप्रत्ययोत्पादकैः ( विश्वासोत्पादकैः ) ब्रह्म सूच्यते प्रतिपाद्यते एभिरिति ब्रह्मसूत्राणि तानिच पदानि इति तैः ब्रह्मसूत्रपदैः ब्रह्मप्रतिपादनसूत्राख्यैः पदैः सुबन्तति ङन्तरूपैश्च गीतं याथात्म्येनाभ्यासितम् ॥ ४ ॥

अमानित्वं स्वश्लाघनाऽभावत्वं अदंभित्वं पाखण्डाऽभावत्वं अहिंसनं परपीडाराहित्यं क्षान्तिः अन्यकृदपराधादि सहनं आर्जवं ऋजुस्वाभावत्वं आचार्योपासनं आचार्यस्य विद्यादातुः शुश्रूषादिना सेवनं शौचं शारीरमनसोः शोधनं स्थैर्यं स्थिरता भावं ( मनसैकाग्र्यं आत्मविनिग्रहः देहेन्द्रियादिप्रचार संकोचः इन्द्रियाणां अर्थाः, इन्द्रियार्थास्तेषु इन्द्रियार्थेषु शब्दादिषु वैराग्यं विरागाऽभावत्वं अनहंकारः दर्पराहित्य मेवच जन्मच उत्पत्तिश्च मृत्युश्च प्राणवियोगं च जराच वृद्धावस्थाच व्याधयश्च रोगाश्च, दुःखानि च अनेक कष्टानि च तेषु जन्मादिदुःखान्तेषु दोषस्य अनुदर्शनं अनुसन्धानम् असक्तिः विषयेषु प्रीत्यभावः पुत्रश्च दाराश्च गृहं च तानि पुत्रदारागृहाणि तान्यादिर्येषां तेषु पुत्रदारागृहादिषु अनभिसंगः आसक्त्यभावः इष्टानां अभिप्रेतानां अनिष्टानां अनभिप्रेतानां च उपपत्तयः संप्राप्तय स्तेषु इष्टानिष्टोपपत्तिषु इष्टानिष्टप्राप्तिषु समचित्तत्वं तुल्यचित्तत्वं मयि ईश्वरे अनन्ययोगेन अन्यत्रासक्तिरहितेन समाधिना अव्यभिचारिणी अव्यभिचरणशीला भक्तिः भजनं तथा विविक्त देश सेवित्वं अरण्यादि एकान्तदेश सेवित्वं जनसंसदि अविनीतजनानां संसदि सभायां अरति अप्रीतिः आत्माद्यववो-

-धकं यज्ज्ञानं तदध्यात्मज्ञानं तस्मिन् अध्यात्मज्ञाने आत्मस्वरूप ज्ञाने नित्यत्वं निष्ठावत्वं तत्वज्ञानस्य पारमार्थिकज्ञानस्य ( मोक्ष ज्ञानस्य ) अर्थः प्रयोजनं अविद्यानिवृत्तिरानन्दप्राप्तिश्च तयो दर्शनं आलोचनं ( प्रत्यक्षीकरणं ) एतत् पूर्वोक्तपञ्चदशो कोक्तं ज्ञानं ज्ञानसाधनं इति प्रोक्तं कथित अतः अस्मात् अन्यथा विपरीतत्वं यत् तत् अज्ञानं हेयज्ञान मित्यर्थः ॥११॥

अमानित्व, अदम्भित्व, अहिंसा, क्षमा, मन वाणीका सीधापन आचार्य सेवा, बाहर भीतर की शुद्धि' स्थिरता, मन और इन्द्रियोंका निग्रह, इन्द्रियोंके विषयमें वैराग्य, निराभिमान, जन्म बुढापा और व्याधि आदिके दुःख तथा दोषोंका बारबार चिंतन, पुत्र स्त्री गृह और धनादिमें आसक्ति तथा ममताका न होना, इष्ट तथा अनिष्टकी प्राप्तिमें सदा समचित्त रहना, मुझ परमेश्वरमें अनन्य योगपूर्वक अव्यभिचारिणी भक्ति, पवित्र और एकान्त स्थलमें रहनेका स्वभाव विषयासक्त मनुष्यके समुदायमें अप्रीति, आत्मा अनात्माके ज्ञानको देनेवाली अध्यात्मविद्याका नित्य प्रति अभ्यास, और तत्त्वज्ञानके अर्थरूप परमात्माका साक्षात्कार, यह सब तो 'ज्ञान' है, और इससे जो विपरीत है वह सब 'अज्ञान' है, ऐसे कहा है ॥७-११॥

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥१२॥

यज्ज्ञेयं ज्ञात्वा बुद्ध्वा अमृतं मोक्षं अश्नुते भुङ्क्ते (प्राप्नोति) तत्स्वरूपमाह—न विद्यते आदिरुत्पत्तिर्यस्य तद् अनादिमत् उत्पत्तिरहितः परं उत्कृष्टं ब्रह्म व्यापकश्चतद् ब्रह्म न सत् न सच्छब्देनोच्यते न असत् नाऽसच्छब्देनोच्यते

जिसको जानकर मनुष्य अमृत भाव (मोक्ष) को प्राप्त होता है; उस ज्ञेय (ब्रह्म) को अब कहता हूं. वह ब्रह्म उत्पत्तिरहित और सबसे परे होने से न सत् और न तो असत् ही कहा जाता है ॥१२॥

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१३॥

तद् ब्रह्म सर्वतः सर्वासु दिक्षु पाणयः हस्ताः पादाश्च चरणाश्च यस्य तत् सर्वतः पाणिपादं तथा सर्वतः सर्वासु दिक्षु अक्षीणि नेत्राणी शिरांसि मुखानि च यस्य तत् सर्वतो क्षिमुखं सर्वतः आसमन्तात् श्रुतिः कर्णं विद्यते यस्येति श्रुतिमत् श्रवणेन्द्रियमत् लोके सर्वजगत् आवृत्य आच्छाद्य व्याप्य तिष्ठति ॥१३॥

वह सब ओरसे हाथ पैरवाला, सब ओरसे नेत्र सिर और

मुखवाला, सब ओरसे श्रोत्रवाला तथा संसारमें सबको आवृत करके स्थितहै ॥१३॥

सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥१४॥

सर्वेषां सम्पूर्णानां इन्द्रियाणां चक्षुरादीनां गुणेषु रूपादिषु आभासो यस्य तत् सर्वेन्द्रियगुणाभासं सर्वेन्द्रियगुणग्राहकं सर्वेन्द्रियविवर्जितं संपूर्णेन्द्रियरहितं असक्तं सर्वत्राऽऽसक्तिरहितं सर्वभृच्च सर्वाधारभूतं निर्गुणं सत्त्वादि गुणरहितं गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण यद्भोक्तृ भोगकर्तृच तज्ज्ञेय मित्यर्थः ॥ १४॥

वह साक्षी इन्द्रियोंके गुणधर्मोंका प्रकाशित करने वाला होने परभी आप सब इन्द्रियोंसे रहित है; आसक्तिरहित होने पर भी सबका धारण पोषण करनेवाला है और गुणोंसे अतीत होने परभी सारे गुणोंको भोगनेवाला है ॥१४॥

वहिरंतश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥१५॥

भूतानां प्राणिनां बहिः बाह्यविषयाद्यासक्तं अन्तर्मध्येच वर्त्तते तथा स्थावरसंगमात् नचरतीति अचरं गतिरहितं जंगम सम्बन्धात् चरं सगतिकं चासीत् सूक्ष्मत्वात् अतिसूक्ष्मत्वात् तदात्मस्वरूपं ब्रह्म अविज्ञेयं ज्ञातुमशक्यं च विदुषाँ तु (त्र्आत्मैवे दं सर्वं ब्रह्म) इत्यादिप्रमाणतः नित्यं विज्ञातत्वात् अँतिके समीपे वर्षसहस्रकोट्याप्य विदुषाँ अप्राप्यत्वात् दूरस्थं अतीव-दूरे वर्त्तमानम् ॥१५॥

वह सारे भूतों के बाहर भीतर परिपूर्ण है चर और अचरभी वही है तथा अति समीप और दूर में भी स्थित है अति सूक्ष्म होने सेही वह मन इन्द्रियों करके जाना जाता है ॥१५॥

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥१६॥**

भूतेषु प्राणिवर्गेषु अविभक्तँच विभागरहितमपि (व्योम वत् प्रतिदेहं एकमपि विभक्त मिव सभागमिव स्थितं वर्तमानं तथा भूतानि बिभर्तीति भूतभर्तृ भूतधातृ पालयितृ ग्रसिष्णु ग्रसनशीलं प्रलयकाले भक्षरणशीलं उत्पत्तिकालेच प्रभविष्णु उत्पादनशीलं यद् तद्ध ज्ञेय मस्ति ज्ञेयत्वावच्छिन्नँ चास्ति ॥१६॥

यह आकाश की तरह अविभक्त होने पर भी सारे भूतोंमें पृथक् पृथक् के सदृश स्थित है विष्णु रूपसे भूतोंका धारण पोषण करने वाला होनेपर रुद्ररूपसे संहार तथा ब्रह्मारूपसे उत्पत्ति करनेहारा भी वही ज्ञेय ब्रह्म है ॥१६॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् १७

सर्वत्र विद्यमानं सन्नोपलभ्यते तर्हि किमपि न स्यादित्याह ज्योतिषां रविचन्द्रादीनां ज्योतिः प्रकाशकं तमसः अज्ञानान्ध कारात् परं दूरस्थं उच्यते कथ्यते ज्ञानं ज्ञानस्वरूपं ज्ञानेन विशिष्टज्ञानेन गम्यं प्राप्यं सर्वस्य संपूर्णप्राणिजातस्यहृदि हृदये धिष्ठितं विशेषेण स्थितंयत् तद्द्ज्ञेयं ज्ञातुं योग्यं ब्रह्म १७॥

यह ब्रह्म सूर्यचन्द्रादि ज्योतियोंका भी ज्योति तथा तमससे ( अज्ञान और अंधकारसे ) पर कहा गया है यह ज्ञान स्वरूप है ज्ञेय ( जानने योग्य ) है तत्वज्ञानसे प्राप्त होनेवाला है और सब के हृदय में स्थित है ॥१७॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥१८॥

इति अमुनापूकारेण क्षेत्रं क्षेत्रपदवाच्यत्वावच्छिन्नं ईश्वर प्राप्तिसाधनं ज्ञानं ज्ञानेन यद् ब्रह्मगम्यते तद् ज्ञेयं समासतः संक्षेपतः पूर्वोक्तश्लोकेभ्यः उक्तं अर्जुनं प्रति निवेदितं मद्भक्तः मदाराधकः एतत्त्रयं ( ज्ञानं ज्ञेयं क्षेत्रं ) विज्ञाय सम्यगवबुद्ध्य मद्भावाय मम ब्रह्मभावाय उपपद्यते युक्तो भवति ॥१८॥

इस प्रकार क्षेत्र, ज्ञान और ज्ञेय के विषयमें जो संक्षेपसे कहा गया इसको तत्त्वसे जानकर मेरा भक्त मेरे भाव को प्राप्त होता है ॥१८॥

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् १९**

प्रकृतिं पुरुषं चैव उभावपि द्वावपि अनादी विद्धि जानीहि विकारान् इच्छादीन् गुणान् बुद्धीन्द्रियादींश्च प्रकृतिसंभवान् प्रकृते रुत्पद्यमानान् विद्धि जानीहि प्रकृतिः शब्देन अपरापूकृतिः गृह्यते पुरुषशब्देन जीवभूता परापूकृतिः गृह्यते ॥१९॥

प्रकृति ( माया ) और पुरुष ( जीव ) इन दोनों को ही अनादि जान, तथा सारे विकार, गुण और पदार्थोंको, भी प्रकृति से ही उत्पन्न हुए जान ॥१९॥

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥२०॥

कार्यं शरीरं ( तदारंकाणि भूतानि ) विषयाश्च करणं इन्द्रियाणि तदाश्रिताः सुखदुःखमोहात्मका गुणाश्च एतयोः कार्यकरणयोः देहेन्द्रिययोः कर्तृत्वे ( कर्तृत्वेन निमित्ते सति ) संसारस्य जगतः हेतुः कारणं प्रकृतिः उच्यते कथ्यते पुरुषः जीवः ( क्षेत्रज्ञः भोक्ता इति नामाभिधः ) भोग्यानां सुखदुःखानां भोक्तृत्वे उपलब्धृत्वे ( भोगकर्तृत्वे ) हेतुः कारणं उच्यते कथ्यते ॥ २० ॥

कार्य ( शरीर ) और करण ( इन्द्रियाँ ) के उत्पन्न करने में प्रकृति ही हेतु कही गई है और सुख दुःखोंके भोगने में पुरुष को ही हेतु कहा गया है ॥२०॥

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥२१॥

हि यस्मात् प्रकृतिस्थः देहेन्द्रियमनः संघातस्थः पुरुषः

जीवः प्रकृतिजान् प्रकृतेरुत्पन्नान् सुखदुःखमोहात्मकान् गुणान् भुंक्ते उपभोगं करोति तस्मात् सच्च असच्च योनयः सदसद्योनयस्तासु जन्मानि तेषु सदसद्योनिजन्मसु देवमनुष्यपश्वादियोन्युत्पत्तिषु अस्य जीवस्य गुणसंगः सुखादिष्वभिसंगः कारणं हेतु रुच्यते ॥२१॥

प्रकृति में स्थित हुआ पुरुष ( जीवात्मा ) ही प्रकृतिसे उत्पन्न हुए गुणों को भोगता है और यह गुणों का संगही इसका ऊंच नीच योनियों में जन्म लेने का कारण है ॥२१॥

उपद्रष्टानुमंता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥२२

अस्मिन् देहेवर्तमानः परः अपरिच्छिन्नशक्तिः पुरुषः जीवः उपद्रष्टा साक्षी मन्ता अनुमोदिता भर्ता धारकः भोक्ता उपभोग कर्ता महांश्चासौ ईश्वरः महेश्वरः परमात्मा इति शब्देन चाप्युक्तः कथितः ॥ २२ ॥

इस देह में उपद्रष्टा, अनुमोदक, पोषक, भोक्ता और स्वामी की सदृश दीखता हुआ भी यह पुरुष स्वरूपसे उन सारी बातों से पर होनेके कारण " परमात्मा भी कहा गया है ॥ २२ ॥

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते २३

यो जनः एवं यथोक्तप्रकारेण पुरुषं आत्मानं गुणैः सह स्वविकारैः सह अविद्यालक्षणं प्रकृतिं च वेत्ति जानाति सः सर्वथा सर्वप्रकारेण वर्तमानोऽपि भूयः पुनः अस्मिन् पतितेदेहे न अभिजायते न उत्पद्यते ॥२३॥

इस प्रकार जो पुरुषको गुणोंसे पर तथा प्रकृति को ही गुण संयुक्त जानता है वह सब प्रकार से वर्तता हुआ भी फिर नहीं जन्मता है ॥२३॥

ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

केचित् निष्पन्नयोगाः आत्मनिस्थितं आत्मानं ध्यानेन ध्यानयुक्तेन आत्मना अन्तः करणेन पश्यन्ति अवलोकयन्ति अन्ये केचन सांख्येन योगेन विचारात्मकत्वेन योगेन च पश्यन्ति अपरे इतरे कर्मयोगेन पश्यन्ति ॥२४॥

इस परमात्माको कोई ध्यान योगद्वारा, कोई सांख्ययोगद्वारा और कोई कर्मयोग द्वारा शुद्ध किये हुए चित्त से अपने में देख पाते हैं ॥२४॥

अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ।
तेऽपिचातितरंत्येव मृत्युं श्रुतिपरायणाः ॥२५॥

अन्येतु केचित्तु श्रुतिः श्रवणं परं उत्कृष्टं अयनं मोक्षसाधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः सन्तः एवं यथोक्तं आत्मानं अजानन्तः अज्ञातवन्तः अन्येभ्यः आचार्येभ्यः श्रुत्वा उपासते ध्यायन्ति तेऽपिजनाः मृत्यु मृत्युयुक्तं संसारं तरन्त्येवअतिक्रामन्त्येव ॥ २५ ॥

इन प्रकारों से न जान सकने वाले जो अन्य मंदबुद्धि पुरुष दूसरोंसे सुनकर श्रद्धासे ही उस परमात्मा को भजते हैं वे सुनकर उपासना करनेवाले भी मृत्यु से तर जाते हैं ॥२५॥

यावत्संजायते किंचित्सत्वं स्थावरजंगमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥२६॥

हे भरतर्षभ हे भरतश्रेष्ठ ! यावत् किञ्चिद् वस्तुमात्रं सत्त्वं जीवं स्थावरजंगमं चराचरं जगत् जायते उत्पद्यते तत्सर्वं सम्पूर्णं क्षेत्र क्षेत्रज्ञयोः संयोग स्तस्मात् क्षेत्रक्षेत्रज्ञसंयोगात् देहात्मसंयोगात् विद्धि जानीहि ॥२६॥

जो कुछ स्थावर जंगम पदार्थ उत्पन्न होते हैं उन सबको हे भरतश्रेष्ठ, क्षेत्र क्षेत्रज्ञ के ( पुरुष और प्रकृतिके ) संयोग सेही उत्पन्न हुए जान ॥२६॥

समं सर्वेषु भूतेषु तिष्ठंतं परमेश्वरम् ।
विनश्यत्स्वविनश्यंतं यः पश्यति स पश्यति ॥

यो जनः विनश्यत्सु विनाशं माप्तेषु सर्वेषु सम्पूर्णेषु भूतेषु प्राणिषु परमेश्वरं ईश्वरं समं निर्विशेषं अविनश्यन्तं अविनाश वन्तं तिष्ठन्तं स्थितिं कुर्वन्तं पश्यति अवलोकयति स जनः पश्यति सम्यगवलोयति ॥२७॥

ऐसा जानकर जो पुरुष अविनाशी परमेश्वर ( क्षेत्रज्ञ ) को सारे नाशवंत भूतों में समान रहा हुआ देखता हैं वही देखता है ॥२७॥

समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम्

हि यस्मात् यः सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयाऽवस्थितं ईश्वरं समं समभावेन पश्यन् अवलोकयन् आत्मना स्वनैव आत्मानं न हिनस्ति न वियोजयति ततः तस्मात् स परां गतिं मोक्षं याति प्राप्नोति ॥२८॥

इस प्रकार जो सर्वत्र एक भांति स्थित हुए परमेश्वरको स्व और परमें वैसे ही समान भाव से देखता है वह अपने से अपने को नष्ट नहीं करता इसलिये परमगति को प्राप्त होता है ॥२८॥

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥

यः सर्वशः सर्वप्रकारेण क्रियमाणानि निर्वर्त्यमानि कर्माणि प्रकृत्या एव (भगवतो मायया एव संभवन्ति ) इति पश्यति अवलोकयति तथा आत्मानं च अकर्तारं पश्यति सः पश्यति सम्यगव लोकयति ॥२९॥

जो पुरुष सारे कर्म सब प्रकार से प्रकृति कर के ही किये हुए देखता है; तथा आत्मा को सदा अकर्ता ही देखता है वही देखता है ॥२६॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥३०॥

यदा यस्मिन्काले भूतपृथग्भावं भूतानां सर्वभूतानां पृथक्त्वं एकस्थं एकस्मिन्नेवात्मनि स्थितं पश्यति अवलोकयति तत् एव च तस्मादीश्वररूपादात्मन एवच विस्तारं संसारस्योत्पत्तिं च पश्यति तदा तस्मिन् काले ब्रह्म सम्पद्यते ब्रह्मैव भवति ॥३०॥

इस प्रकार जीवात्मा जब भूतों के न्यारे न्यारे रूप को एक ही परमात्मा विषे स्थित देखता है और उस एकसे ही उन सबका विस्तार देखता है तब परब्रह्मको प्राप्त होता है ॥३०॥

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौंतेय न करोति न लिप्यते ॥

हे कौन्तेय हे कुन्तीपुत्र! अयंदृश्यमानः परमात्मा (आत्मा) शरीरस्थोऽपि देहस्थोऽपि अनादित्वात् आद्योत्पत्तिरहितत्वात्

निर्गुणत्वात् अव्ययः परसम्बन्धादिनाशशून्यः अतः न करोति न किमपि विधत्ते न लिप्यते नैव लिप्तो भवति ॥३१॥

अनादि तथा गुणातीत होनेसे हे कौन्तेय, यह अविनाशी परमात्मा शरीर में स्थित हुआ भी वास्तव में न कुछ करता है, न लेपायमान होता है ॥३१॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥

यथा येन प्रकारेण सर्वगतं सर्वत्रव्याप्तं आकाशं सौक्ष्मात् अतिसूक्ष्मस्वभावात् न उपलिप्यते न संबध्यते तथा तेनप्रकारेण सर्वत्र देहे अवस्थितः विद्यमानः आत्मा नोपलिप्यते न संबध्यते ॥३२॥

जैसे आकाश सर्वव्यापी होने पर भी अति सूक्ष्म होने से लिप्त नहीं होता, वैसे यह आत्मा भी सर्व शरीरों में रहता हुआ लेपायमान नहीं होता ॥३२॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥

हे भारत हे अर्जुन । यथा येन प्रकारेण एकः रविः भानुः इदं दृश्यमानं कृत्स्नं संपूर्णं लोकं प्रकाशयति तथा तथैव क्षेत्री आत्मा कृत्स्नं क्षेत्रं सर्वशरीरं प्रकाशयति ॥३३॥

जैसे एकही सूर्य इस संपूर्ण ब्रह्मांड को प्रकाशित करता है, वैसेही हे भारत, वह एकही क्षेत्री-परमात्मा सारे क्षेत्र प्रकाशितकर रहा है ॥३३॥

क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ३४॥

ये जनाःएवं अनेन प्रकारेण क्षेत्रक्षेत्रज्ञयोः देहजीवयोः अन्तरं वैलक्षण्य विशेषं तथा भूतप्रकृतिमोक्षं च भूतानां प्रकृतेः मोक्षणं च ज्ञानचक्षुषा ज्ञाननेत्रेण विदुः जानन्ति ते पुरुषाः परं मोक्षं यान्ति प्राप्नुवन्ति ॥३४॥

इस प्रकार क्षेत्र और क्षेत्रज्ञ के भेद को तथा विकार सहित प्रकृति से छूटने के उपाय को जो ज्ञानचक्षु से जानते हैं वे परमपद को पाते हैं ॥३४॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगोनाम त्रयोदशोऽध्यायः ॥१३॥

# चतुर्दशोऽध्यायः ।

## गुणत्रय विभाग योग ।

श्रीभगवान् उवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ।

भूयः पुनः ज्ञानानां मध्ये उत्तमं उत्तमफलकं परं उत्कृष्टं ज्ञानं प्रवक्ष्यामि कथयिष्यामि यज्ज्ञानं ज्ञात्वा बुद्ध्वा सर्वे मुनयः मननशीलाः परां उत्कृष्टां मोक्षाख्यां सिद्धिं इतः अस्मात्संसारात् गताः प्राप्ताः ॥ १ ॥

ज्ञानों में उत्तम ऐसा परम ज्ञान फिर भी तुझे कहूंगा जिसे जानकर सारे मुनिजन इस संसारसे छूट परम सिद्धिको प्राप्तहोगये हैं ॥१॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥ २ ॥

इदं वक्ष्यमाणं ज्ञानं उपाश्रित्य आश्रित्य ममेश्वरस्य साधर्म्यं मत्स्वरूपतां आगताः प्राप्ताः सन्तः सर्गेऽपि सृष्टिकालेऽपि नोप जायन्ते नोत्पद्यन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथयन्ति व्यथां नाऽऽपद्यन्ते ( न च्यवन्तीत्यर्थः ॥ २ ॥

इस ज्ञान का आश्रय करके मेरे स्वरूप को प्राप्तहुए पुरुष फिर सृष्टि-उत्पत्ति में भी उत्पन्न नहीं होते और प्रलयकालमे नष्ट नहीं होते ॥२॥

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥३॥

हे भारत ! हे भरतकुलोत्पन्न ! ममेश्वरस्य ( शुद्धचिन्मात्रस्य योनिः गर्भप्रवेशस्थानं महद्ब्रह्म प्रकृतिरस्ति तस्मिन् प्रकृतौ अहं ईश्वरः गर्भं स्वप्रतिबिम्बरूपं दधामि अर्पयामि ततः तस्मात् गर्भाधानात् सर्वभूतानां प्राणिनां संभवः उत्पत्तिर्भवति जायते ॥ ३ ॥

हे भारत, महद् ब्रह्म (महान् प्रकृति ) रूप मेरी योनि है मैं इसमें चेतनारूप बीज को रखता हूं उससे सारे भूतों की उत्पत्ति होती है ॥३॥

सर्वयोनिषु कौंतेय मूर्तयः संभवंति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥४॥

हे कौन्तेय ! हे कुन्तीपुत्र सर्वयोनिषु सर्वप्राणियोनिषु या मूर्तयः शरीराणि संभवन्ति उत्पद्यन्ते तासां मूर्तीनां योनि कारणं महद्ब्रह्म प्रकृतिरस्ति तासां बीजप्रदः बीजार्पकः अहं ईश्वरोऽस्मि ॥ ४ ॥

हे कौन्तेय, सब योनियों में जितने शरीर उत्पन्न होते हैं उन सबकी मूल माता यह मूलमाया है और मैं उसमें बीज रखनेवाला पिता हूं ॥४॥

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥५॥

हे महाबाहो ! हे दृहद्भुज सत्वं रजः तमः इत्येव नामानो गुणाः प्रकृतिसंभवाः प्रकृतितः संभव उत्पत्तिर्येषां तादृशाः भवन्ति ते देहे शरीरे अव्ययं विनाशादिधर्मरहितं देहिनं देह वन्तं निबध्नन्ति वशीकुर्वन्ति ॥ ५ ॥

हे महाबाहो, ऐसे प्रकृति से उत्पन्न हुए सत्त्व, रज, और

तम तीनों गुण अविनाशी जीवात्मा को देह में बद्ध करते हैं ॥५॥

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥६॥

हे अनघ ! हे पापरहित तत्र तेषु गुणत्रयेषु निर्मलत्वात् दुःखमोहाख्यमलरहितत्वात् प्रकाशकं मणिरिव सर्वद्योतकं अनामयं निरुपद्रवं सत्वं सत्वगुणं सुखसंङ्गेन सुखेन सह ज्ञानसंङ्गेन ज्ञानेन च सह जीवं बध्नाति बन्धनं करोति ॥ ६ ॥

हे निष्पाप, उनमें सत्वगुण अपनी निर्मलताके कारण प्रकाशक और निरुपद्रवी होनेसे जीवको सुख और ज्ञानकी आसक्तिसे बांधता है ॥६॥

रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ।
तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् ॥७॥

हे कौन्तेय ! तृष्णासंगसमुद्भवं तृष्णा अभिलाषा तत्संगेन उद्भव उत्पत्तिर्यस्य तादृशं रजः रजोगुणं रागात्मकं अनुरञ्जनात्मकं विद्धि जानीहि तद्रजः देहिनं जीवं कर्मसंगेन वैदिककर्मफलसंगेन ( तत्परतया ) निबध्नाति बन्धनं करोति ॥ ७ ॥

हे कौन्तेय, रागरूप रजोगुणको तृष्णा और आसक्ति से उत्पन्न हुआ जान वह इस जीव को कर्म और फलकी आसक्तिसे बांधता है ॥७।

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥

हे भारत ! हे अर्जुन ! सर्वदेहिनां सर्वप्राणिनां मोहनं मोहकरं ( अविवेककरं ) अज्ञानजं अज्ञानोत्पन्नं तमः तमोगुणं विद्धि जानीहि प्रमादालस्यनिद्राभिः प्रमादश्च आलस्यं च निद्राच ताभिः तत् जीवं निबध्नाति ॥८॥

और हे भारत, सारे देहाभिमानियों को मोहमें डालने वाले तमोगुणको अज्ञान से उत्पन्न हुआ जान वह जीव को प्रमाद आलस्य और निद्रा के द्वारा बांधता है॥८॥

सत्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥

सत्वं सत्वगुणः सुखे संजयति संयोजयति रजः रजोगुण कर्मणि यज्ञादिकर्मणि संजयति तमस्तु तमोगुणस्तु ज्ञानं आवृत्य आच्छाद्य प्रमादे प्रमादकरणे संजयति उत निश्चयेन ॥ ९ ॥

सत्त्वगुण सुख में और रजोगुण कर्मों में लगाता है परन्तु हे भारत, तमोगुण तो ज्ञानको ढांक कर जीवको प्रमाद में भी पटक देता है ॥९॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा ॥१०॥

हे भारत! हे अर्जुन! सत्वं सत्वगुणः रजस्तमश्च रज स्तमसीति गुणद्वये अभिभूय तिरस्कृत्य भवति वर्धते रजः रजो गुणः सत्वं सत्वगुणं तमश्च तमोगुणं च अभिभूय वर्द्धते तथैव तमः तमोगुणः सत्वं सत्वगुणं रजः रजोगुणं चअभिभूय तिर स्कृत्य वर्धते ॥ १० ॥

हे भारत, रजोगुण और तमोगुणको दबानेसे सत्त्वगुण बढता है सत्त्व और तमको दबाने से रजोगुण बढता है तथा सत्त्व और रज को दबाने से तमोगुण बढता है ॥१०॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्यादिवृद्धं सत्वमित्युत ११

अस्मिन् देहे शरीरे यदा सर्वद्वारेषु श्रोत्रादिषु प्रकाशः ज्ञानं सर्ववस्तुप्रकाशकं ज्ञानं जायते उत्पद्यते तदा सत्वं सत्व

गुणं विवृद्धं अतीववृद्धं विद्यात् जानीयात् ॥ ११ ॥

इस देह में जब मन-इन्द्रियादि सारे द्वारोंमें प्रकाश (ज्ञान किंवा आनंद) उत्पन्न होता है तब सत्त्वगुणको बढा हुआ जानो ॥११

लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा।
रजस्येतानि जायंते विवृद्धे भरतर्षभ॥१२॥

हे कुरुनन्दन हे कुरुपुत्र यदा रजसि रजोगुणे विवृद्धे वृद्धिंगते सति तदा लोभः परद्रव्याद्यभिलाषा अग्निहोत्रादौ प्रवृत्तिः प्रवर्तनं कर्मणां गृहनिर्माणादीनां आरम्भः अशमः अशान्तिः स्पृहा परधनादिग्रहणेऽभिलाषा एतानि पूर्वोक्तानि जायन्ते उत्पद्यन्ते ॥ १२ ॥

हे भरतश्रेष्ठ, रजोगुण के बढने पर लोभ, प्रवृत्ति, कर्मों का आरम्भ, अशान्ति और इच्छा, यह सब उत्पन्न होते हैं ॥१२॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायंते विवृद्धे कुरुनंदन॥१३॥

हे कुरुनन्दन तमसि तमोगुणे विवृद्धे वृद्धिंगते सति अप्रकाशः प्रकाशाऽभावः (अज्ञानता) अप्रवृत्तिः स्तब्धता प्रमादः

कार्याकार्यविवेकराहित्यं मोह एव च संसारासक्तिश्चैव एतानि पूर्वोक्तानि जायंते उत्पद्यन्ते ॥ १३ ॥

हे कुरुनन्दन, तमोगुणके बढने पर असुख अज्ञान, अनुद्यम, प्रमाद और भ्रमनिद्रादि मोहिनी वृत्तियां, यही सब उत्पन्न होते हैं॥१३॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकान् अमलान्प्रतिपद्यते १४

यदा यस्मिन्समये सत्वे सत्वगुणे प्रवृद्धेतु विवृद्धिंगते तु देहभृत् प्राणिवर्गः प्रलयं मरणं याति तदा तस्मिन्समये अमलान् मलरहितान् उत्तमविदान् उत्तमज्ञानयुक्तान् लोकान् प्रतिपद्यते प्राप्नोति ॥ १४ ॥

जीवात्मा जब सत्वगुणकी वृद्धिमें मरजाता है, तब तो उत्तम ज्ञानियोंके निर्मल लोकोंको प्राप्तहोता है ॥१४॥

रजसि प्रलयं गत्वा कर्मसंगिषु जायते ।
तथा प्रलीनस्तमसी मूढयोनिषु जायते ॥१५॥

रजसि(रजोगुणे विवृद्धेसति ) प्रलयं मरणं गत्वा प्राप्य

कर्मसंगिषु कर्मासक्तिसंयुक्तेषु मनुष्येषु उपजायते तथा तमसि तमोगुणे प्रलीनः निमग्नः मृतश्चेत् मूढयोनिषु पश्वादिषु योनिषु उपजायते उत्पद्यते ॥ १५ ॥

रजोगुणकी वृद्धिमें मरजाने पर कर्मासक्त मनुष्यों में जन्म पाता है और तमोगुण की वृद्धिमें मरनेवाला कीट, पशु आदि मूढ योनियोंमें उत्पन्न होता है ॥१५॥

**कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ।**
**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥१६॥**

सुकृतस्य सात्विकस्य कर्मणः निर्मलं दोषरहितं ( दुःखादि शून्यं ) सात्विकं फलं ज्ञानवैराग्यादिकं फलं आहुः कथयन्ति रजसस्तु राजसस्य कर्मणः फलं दुखं दुःखजनकं फलं आहुः तथा तमसः तामसस्य कर्मणः फलं अज्ञानं अज्ञानात्मकं आहुः ॥ १६

सुकृतका तो सात्विक और निर्मल ( सुख, ज्ञान, वैराग्यादि ) फल कहा है राजस कर्म का फल दुःख और तामस का फल अज्ञान कहा है ॥१६॥

**सत्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥१७॥**

सत्वात् सत्वगुणात् ज्ञानं वैराग्यादिकं ज्ञानं जायते उत्पद्यते रजसः रजोगुणात् लोभ एव च जायते तमसः तमोगुणात् प्रमादमोहौ भवतः अज्ञानं च उत्पद्यते ॥ १७ ॥

सत्वसे ज्ञान, रजोगुणसे लोभ और तमो गुणसे प्रमाद, मोह तथा अज्ञान उत्पन्न होते हैं ॥१७॥

ऊर्ध्वं गच्छंति सत्वस्था मध्ये तिष्ठंति राजसाः
जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ॥

सत्वस्थाः सत्वकर्मणि निरता ऊर्ध्वं देवादिलोकेषु गच्छन्ति यान्ति राजसाः राजसकर्मप्रवृत्ताः मध्ये मध्यलोके ( मनुष्य लोके ) तिष्ठन्ति स्थितिं कुर्वन्ति जघन्यश्चासौ गुणश्च जघन्यगुणः तस्य जघन्यगुणस्य वृतिः निद्रालस्यादि स्तस्मिन् तिष्ठन्ति इति जघन्यवृत्तिस्था निकृष्टवत्तिस्थाः तामसाः तमो गुणस्थाः अधो गच्छन्ति पश्वादियोनिषु उपयान्ति ॥ १८ ॥

सात्विक स्थिति वाले उत्तम गतिको, रजोगुणी मध्यम गति को और अधम गुणवृत्ति वाले तामसी लोग नीच गति को जाते हैं ॥१८॥

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।

गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति १९

यः द्रष्टा विद्वान्पुरुषः यदा यस्मिन्समये गुणेभ्यः सत्वादिभ्य अन्यं भिन्नं कर्तारं न पश्यति नावलोकयति आत्मानं च गुणेभ्यः सत्वादिभ्यः परं ( गुणव्यापारसाक्षिभूतं ) मां वेत्ति जानाति तदा तस्मिन् समये स जनः मद्भावं ब्रह्मभावं गच्छति प्राप्नोति ॥ १६ ॥

पुरुष जब गुणोंके विना अन्य किसीको कर्ता भोक्ता नहीं देखता और अपनेको तीनों गुणोंमेंपर अर्थात् साक्षीमात्र जानता है तब वह मेरे परमात्मभावको प्राप्त होता है ॥१६॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥२०॥

अयं देही देहधारी देहसमुद्भवान् देहोत्पत्तिबीजभूतान् एतान् सत्वादीन् त्रीन् त्रित्वसंख्याकान् गुणान् अतीत्य अतिक्रम्य जन्म च दुःखानि च तानि तैः जन्ममृत्युजरादुःखै र्विमुक्तः रहितः सन् अमृतं जन्मोत्पत्तिरहितं आत्मानं अश्नुते प्राप्नोति ( मोक्षं आप्नोति ) ॥ २० ॥

देहको उत्पत्तिके कारणरूप इन तीनों गुणों को पुरुष इस प्रकार उल्लंघन कर जन्म, मृत्यु, बुढापा और सब प्रकारके दुःखोंसे सदाके लिये छूटकर अमृतको ( परम सच्चिदानन्दपदको ) प्राप्तहोता है २०॥

अर्जुन उवाच ।

कैर्लिंगैस्त्रीन्गुणानेतानतीतो भवति प्रभो ॥
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥२१।

हे प्रभो - हे सर्वशक्तिमन् कैः लिंगैः चिन्हैश्च एतान् पूर्वोक्तान् त्रीन् त्रित्वसँख्याकान् गुणान् सत्वादीन् अतीतः अतिक्रान्तो भवति किमाचारः कोऽस्याचारश्च कथं केन च प्रकारेण एतान् पूर्वोक्तान् त्रीन् गुणान् अतिवर्तते उल्लंघते ॥ २१ ॥

हे प्रभो, इन तीन गुणोंसे अतीत हुआ पुरुष किन २ लक्षणों युक्त होता है ? कैसे आचरणों वाला होता है और किस उपाय से इन तीनों गुणों को लांघ जाता ? ॥२१॥

श्रीभगवान् उवाच

प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥

हे पाण्डव ! हे अर्जुन ! यो जनः प्रकाशं च ज्ञानं च प्रवृत्तिं च मोहं च अज्ञानं च एतानि सम्प्रवृत्तानि सम्यग् विषय भावेन उद्भूतानि ( जातानि ) न द्वेष्टि द्वेषं करोति निवृत्तानि नष्टीभूतानि न काँक्षति न अभिलषति ॥ २२ ॥

हे पाण्डव, सत्त्वगुणका लक्षण आनन्द, रजोगुण का लक्षण प्रवृत्ति किंवा तमोगुणका लक्षण मोहसेभी न तो वह प्रवृत्ति होनेपर द्वेष करता है और न निवृत्त होनेपर इच्छाकरता है ॥२२॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेंगते ॥२३॥

यो जनः उदासीनवत् हर्षशोकरहितवत् आसीनः स्थितः सन् गुणैः सत्वादिभिः न विचाल्यते न विचलितो भवति गुणाः सत्वादय एव वर्तन्ते स्वस्व कार्येषु प्रवर्तन्ते इति ज्ञात्वैव योजनः अवतिष्ठति सावधानतया स्थितो भवति न च इङ्गते नैव चेष्टां करोति ॥ २३ ॥

इस प्रकार जो गुणों से चलायमान न होकर उदासीनकी तरह रहता है और जो गुणही गुणों में वलते हैं ऐसा समझ कर स्थित रहता है तथा चलायमान नहीं होता ॥२३॥

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिंदात्मसंस्तुतिः ॥

समे तुल्ये दुःखसुखे यस्य स समदुःखसुखः स्वआत्मनि तिष्ठतीति स्वस्थः प्रसन्नः लोष्ठं च मृत्तिकागोलकश्च अश्मा च पाषाणश्च कांचनश्च कनकश्च समानि तुल्यानि यस्य स सम लोष्ठाश्मकांचनः तुल्ये समाने प्रियाऽप्रिये यस्य स तुल्यप्रिया प्रियः धीरः धीमान् निन्दा च आत्मसंस्तुतिश्च निन्दात्मसं स्तुती तुल्ये समाने निन्दात्मसंस्तुती यस्य यतेः स तुल्य निन्दात्मसंस्तुतिः॥ २४ ॥

और जो सुखदुःखमें समान, आत्म निष्ठा में स्थितिवाला, मिट्टी, पत्थर, और सुवर्णमें समदृष्टिवाला, धैर्यवान्, प्रिय और अप्रिय को तथा निन्दा और स्तुति को तुल्य माननेवाला ॥२४॥

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारंभपरित्यागी गुणातीतः स उच्यते ॥२५॥

मानं च अपमानं च तयोः मानापमानयोः प्रतिष्ठाऽनादरयोः तुल्यः समानः मित्रं च अरिश्च मित्राऽरी तयोः पक्षयोः पक्षपातयोः तुल्यः समः तथा सर्वान् सम्पूर्णान् कार्यारंभान् परित्यक्तुं

शील मस्येति सर्वारंभपरित्यागी सर्वारंभकार्यफलत्यागकः यः सः गुणातीतः उच्यते कथ्यते ॥२५॥

जो मान और अपमानमें तथा शत्रु और मित्रके पक्षमें समान है तथा जिसने शरीर यात्राके उपरान्त अन्य सारे कर्मोंका परित्याग किया है वह गुणातीत कहा जाता है॥२५॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते २६

यो मनुजः मामीश्वरं अव्यभिचारेण एकनिष्ठत्वेन भक्ति, योगेन भक्तिभावेन सेवते उपासते स, जनः एतान् पूर्वोक्तान् गुणान् अतीत्य उल्लंघ्य ब्रह्मभूयाय मोक्षाय कल्पते समर्थो भवति ॥२६॥

जो पुरुष मुझ गुणातीत परमेश्वर को अव्यभिचारी भक्तिरूप योगकेद्वारा भजता है वही इन तीनों गुणोंको भली भांति उल्लंघन करके ब्रह्मभावके लिये योग्य होता है॥२६॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च २७

इति निश्चयेन अव्ययस्य अविकारिणः अमृतस्य अविनाशिनः ब्रह्मणः परमात्मनः अहं श्रीकृष्णः प्रतिष्ठा वासस्थानं च शाश्वतस्य नित्यस्य धर्मस्य ऐकांतिकस्य निरन्तरस्य सुखस्य च अहं प्रतिष्ठा निवासस्थानं चास्मि ॥२७॥

क्योंकि उस अविनाशी और अमृतरूप ब्रह्मका, शाश्वत धर्मका तथा परमावधि अखण्ड एकरस सुख ( मोक्ष ) का मैं ही आश्रय हूँ ॥२७॥

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभाग योगोनाम चतुर्दशोऽध्यायः ॥१४॥

# पंचदशोऽध्यायः ॥

श्रीभगवान् उवाच ॥

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् १।

यं अश्वत्थं संसाररूपपीप्पलवृक्षं ऊर्ध्वमूलं उपरिमूलं (समष्टिरूपचतुर्मुखब्रह्ममूलं) अधः शाखं अधः प्ररोहं ( मर्त्यलोके सकलमनुष्यस्थावरादिशाखं ) अव्ययं अविनाशिनं श्रुतय आहुः कथयन्ति तथा छन्दांसि ऋग्यजुः सामलक्षणानि यस्य वृक्षस्य पर्णानि पत्राणि प्राहुः यो जनः तं अश्वत्थं वेद जानाति सः वेदवित् वेदार्थविद्भवति ॥१॥

ऊपर जिसकी जड है नीचे जिसकी शाखा हैं और वेद जिसके पत्ते हैं; उस संसाररूप पीपलके वृक्षको अविनाशी कहते हैं; परंतु जो उसको यथार्थ जानता है वही सच्चा वेदवेत्ता है ॥१॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा ।
गुणप्रवृद्धा विषयप्रवालाः ॥

अधश्च मूलान्यनुसंततानि ।
कर्मानुबंधीनि मनुष्यलोके ॥ २ ॥

गुणप्रवृद्धाः गुणैः सत्वादिभिः प्रवृद्धाः स्थूली कृताः ( वृद्धिंगताः ) विषय प्रवालाः विषयाः शब्दादयः प्रवालाः पत्राणि यस्याः एवं भूतास्तस्य वृक्षस्य शाखाः प्ररोहा अधः नीच्चैः ऊर्ध्व उपरि अपि प्रसृताः प्रसरं प्राप्ताः तथा अधः नीच्चैः मनुष्य लोके कर्मानुबन्धीनि धर्माधर्माख्य बन्धीनि मूलानि वासनारूपाणि मूलानि अनुसंततानि अनुप्रविष्ठानि सन्ति ॥२॥

सत्वादि गुणों रूप जलसे बढी हुई तथा विषयरूपी कोंपलों वाली उस वृक्षकी शाखायें नीचे और ऊपर फैली हुई हैं; कर्मोंके अनुसार मनुष्य योनिमें बांधनेवाली अहंता, ममता और वासना-रूपी मूलोयां भी नीचे और ऊपर सभी लोकोंमें फैली हुई हैं ॥२॥

न रूपमस्येह तथोपलभ्यते ।
नांतो न चादिर्न च संप्रतिष्ठा ॥
अश्वत्थमेनं सुविरूढमूल ।

असंगशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥

तत: पदं तत्परिमार्गितव्यं ।

यस्मिन्गता न निवर्तंति भूयः ॥

तमेव चाद्यं पुरुषं प्रपद्ये ।

यत: प्रवृत्तिः प्रसृता पुराणी ॥४॥

यथा वर्णितं तथा अस्य संसारवृक्षस्य रूपं इह लोके न उपलभ्यते प्राप्यते अस्य अन्तोऽवसानं च नोपलभ्यते आदि इत आरम्भायं प्रवृत इति च नोपलभ्यते संप्रतिष्ठा स्थितिश्च नोपलभ्यते सविरूढमूलं दृढमूलं एनं अश्वत्थं दृढेन दृढीकृतेन असंगशस्त्रेण वैराग्यशस्त्रेण छित्वा छेदनं कृत्वा ततः पश्चात् वैष्णवं पदं मार्गितव्यं अन्वेषितव्यं यस्मिन्पदे गताः प्राप्ताः भूयः पुनः संसाराय न निवर्तन्ति न आवर्तन्ते यतः सकाशात् पुराणी चिरंतनी प्रवृत्तिः प्रसृता प्रकटिता आसीत् तमेव आद्यं आदौभवं पुरुषं (अहमपि) प्रपद्ये शरणं व्रजामि ॥३ ॥४॥

वास्तवमें न तो इस संसार वृक्षका यहां वैसा अविनाशी रूप पाया जाता है; और न ही उसकी उत्पत्ति स्थिति, तथा अंत पाये

जाते हैं. इसलिए प्रथम यह वासनादि अति दृढ मूलियोंवाले संसार वृक्षको अपगता रूप दृढ शस्त्रसे काट कर, तब जिस परमात्मासे यह पुरातन वृक्षकी प्रवृत्ति फैली हुई हैं, "उसी आद्य पुरुषकी मैं शरण हूं" इस भावको धारण करके उस परमात्मपदको अच्छी प्रकार खोजना चाहिये कि, जिस पद को जाननेवाले फिर संसारमें नहीं लौट आते ॥३॥४॥

निर्मानमोहा जितसंगदोषा।
अध्यात्मनित्या विनिवृत्तकामाः॥
द्वंद्वैर्विमुक्ताः सुखदुःख संज्ञै।
गच्छंत्यमूढाः पदमव्ययं तत् ॥ ५ ॥

ये जनाः मानश्च मोहश्च तौ निर्गतौ येभ्यस्ते निर्मान मोहाः मानमोहरहिताः जितः पराजितः संग अभिमानो दोषो रागादिश्च यै स्ते जितसंगदोषा अध्यात्मनित्या आत्मध्यान पराः विनिवृत्तिकामाः त्यक्तसर्वपरिग्रहाः सुखदुःखसंज्ञैः सुख दुःख नामाभिधैः द्वन्द्वैरुपाधिभिः विमुक्ताः रहिताः जनाः सन्ति ते अमूढाः विद्वांसस्तत् अव्ययं नाशरहितं पदं स्थानं गच्छिन्ति ॥

मानमोहको तजनेवाले, अहंकारको जीतनेवाले, सदा अध्यात्म अभ्यासमें रहनेवाले, अन्य कामनाओंको छोड देनेवाले,

और सुखदुःखादि द्वन्द्वोंसे छूटे हुए अमूढ पुरुषही उस अविनाशी परमपदको पहुंचते हैं ॥५॥

**न तद्भासयते सूर्यो न शशांको न पावकः ॥**
**यद्गत्वा न निवर्तंते तद्धाम परमं मम ॥ ६ ॥**

तत्पदं सूर्यो न भासयते प्रकाशयते शशांकश्चन्द्रश्च न भासयते पावकः अग्निश्च न भासयते यत्पदं गत्वा न निवर्तन्ते पुन र्न आगच्छन्ति तत् मम विष्णोः परमम् उत्कृष्टं धाम पदमस्ति ॥ ६ ॥

जिस स्वयंप्रकाश पदको न सूर्य, न चन्द्र और न अग्नि प्रकाशित कर सकता है; और जहांपर पहुंचे हुए लोग फिर संसारमें नहीं आते; वही मेरा परम धाम ( परमपद ) है ॥६॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ॥**
**मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥**

एव मुक्तस्वरूपः सनातनश्चिरंतनः जीवलोके संसारे जीवभूतः जीवरूपः मम एव ईश्वरस्यैव अंशो भागोऽवयव एकदेशः सः च जीवः स्थानि प्रकृतौ देहे कर्णशष्कुल्यादौ स्थितानि मनः षष्ठं येषां तादृशानि पञ्चेन्द्रियाणि कर्षति आकर्षति ॥ ७ ॥

संसारमें यह जीवात्मा मेराही सनातन अंश है. जो प्रकृति में रही हुई पांचों इन्द्रियों को छठे मन सहित खींच लेता है ॥७॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥
गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥८॥

यदा यस्मिन् काले (अयमिन्द्रियादीनां) ईश्वरः देहस्वामी जीवः यत् शरीरं देहं अवाप्नोति अपि च यत् यस्मात् शरीरात् उत्क्रामति निर्गत्य गच्छति तदा तस्मिन्काले वायुः पवनः आशयात् पुष्पादे गन्धान् इव एतानि मनः षष्ठेन्द्रियाणि, गृहीत्वा आदाय संयाति गच्छति ॥८॥

जैसे वायु पुष्पादिकोंसे गन्धको ग्रहण करके ले जाता है, वैसे यह देहादिकोंका स्वामी जीवात्माभी जिस शरीरको छोडता है उससे मन-इन्द्रियोंको ग्रहण करके जिस देहको प्राप्त होता है उसमें ले जाता है ॥८॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥

अयं जीवात्मा श्रोत्रं कर्णं चक्षुर्नेत्रं स्पर्शनं त्वगिन्द्रियम् रसनम् जिव्हेन्द्रियम् घ्राणम् नासिकेन्द्रियं मन एतानि एव अधिष्ठाय

स्थितिं कृत्वा विषयान् शब्दादीन् उपसेवते उपभुङ्क्ते ॥ ९ ॥

वहां फिर उस कान, आंख, त्वचा, जीभ नाक और मनका आश्रय करके यह जीव विषयोंका सेवन करता है ॥९॥

उत्क्रामंतं स्थितं वापि भुंजानं वा गुणान्वितम्
विमूढा नानुपश्यंति पश्यंति ज्ञानचक्षुषः ॥१०

गुणान्वितं सुखदुःखमोहाख्यैः गुणैरन्वितं संयुक्तं उत्क्रामन्तं पूर्वोपान्तं देहं परित्यजन्तं वा स्थितं वा देहे तिष्ठन्तं वा भुञ्जानमपि शब्दादीन् उपलभमानमेनं जीवं विमूढा अज्ञानिनो न अनुपश्यन्ति अवलोकयन्ति ज्ञानचक्षुषः विशिष्ट ज्ञाननेत्राः पश्यन्ति विशेषेण अवलोकयन्ति ॥ १० ॥

देहको छोड़ जाते हुए, दूसरे देहमें स्थित होते हुए यह गुणों से युक्त जीवात्माको मूढ-अज्ञानी, जान नहीं सकते किन्तु ज्ञान रूप नेत्रवाले ही जान सकते हैं ॥१०॥

यतंतो योगिनश्चैनं पश्यंत्यात्मन्यवस्थितम् ॥
यतंतोऽप्यकृतात्मानो नैनं पश्यंत्यचेतसः ॥११

योगिनो ध्यानवन्तः यतन्तः प्रयत्नं कुर्वन्तः सन्तः आत्मनि

स्थितं विद्यमानं मेनं जीवात्मानं पश्यन्ति अवलोकयन्ति अकृ तात्मानः असंकृतात्मानः यतन्तः अपि प्रयत्नं कुर्वन्तोऽपि अचे तसः अविवेकिन एनं न पश्यन्ति अवलोकयन्ति ॥ ११ ॥

प्रयत्न करनेवाले योगीजन ही अपनेमें रहे हुए इस आत्मा-को देख सकते हैं; मलिन अतःकरण वाले अज्ञानी जन यत्न करते पर भी इसको नहीं देख सकते ॥११॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥
यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

यत् आदित्यगतं आदित्याश्रयं तेजः अखिलं संपूर्णं जगत् भासयते प्रकाशयते यत् चन्द्रमसि चन्द्रे च तेजः यत् अग्नौ तेजः तत् तेजो मामकं मदीयं विद्धि जानीहि ॥ १२॥

जो तेज सूर्य में रहा हुआ संपूर्ण जगत्को प्रकाश देता है; और जो अग्निमें तथा चन्द्रमे रहा हुआ है; उस तेज को मेरा ही जान॥१२॥

गामाविश्य च भूतानि धारयाम्यहमोजसा ॥
पुष्णामिचौषधीः सर्वाः सोमो भूत्वा रसात्मकः

अहं ईश्वरश्च गां पृथिवीं माविश्य प्रविश्य भूतानि स्थावर जङ्गमात्मकानि ओजसा बलेन धारयामि दधामि रसात्मकः रस स्वभावः सोमो भूत्वा निशाकरो भूत्वा सर्वाः ओषधीः पुष्णामि पुष्टिमती करोमि ॥१३॥

पृथ्वीमें प्रवेश करके अपने ओजससे भूतोंको मैंही धारण करता हूं और रसात्मक चंद्र होकर मैंही संपूर्ण औषधियोंका पोषण करता हूं ॥१३॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

अह मीश्वरो वैश्वानरो जठराग्निर्भूत्वा प्राणिनां देहधारिणां देहं आश्रित आश्रयीभूतःप्राणापानसमायुक्तः प्राणापानाभ्यांवायुविशेषाभ्यां युक्तः संयुक्तः सन् चतुर्विधं चतुष्प्रकारकं अन्नं पचामि ॥ १४ ॥

जठराग्नि होकर प्राणियोंके शरीरमें स्थित हुआ मैंही प्राण तथा अपान से संयुक्त होकर चार प्रकारके अन्नको पचाता हूं ॥१४॥

सर्वस्य चाहं हृदि सन्निविष्टो ।

मत्तः स्मृतिर्ज्ञानमपोहनं च ॥

वेदैश्च सर्वैरहमेव वेद्यो ।

वेदांतकृद्वेदविदेव चाहम् ॥१५॥

अहमीश्वरः सर्वस्य प्राणिमात्रस्य हृदि हृदये सन्निविष्टो ऽस्मि मत ईश्वरादेव सर्वस्य स्मृतिः स्मरणशक्ति ज्ञानम् च ज्ञानशक्तिश्च अपोहनं अज्ञानम् च भवति सर्वैः संपूर्ण वेदै वेद्यं वेदितुं योग्यं अहमेव, वेदान्तकृत् च वेदांतोक्तविद्यासंप्रदायकृत् च वेदवित् वेदार्थविच्च अहमेवास्मि ॥ १५ ॥

मैं सबके हृदयमें अंतर्यामी रूपसे स्थित हूं; तथा मुझसेही सबको स्मृति, ज्ञान, और उनका नाश-अज्ञान होता है. संपूर्ण वेदों से जानने योग्य वस्तुभी मैं हूं; और वेदान्तका कर्ता यथा वेदोंका जानने वालाभी मैंही हूं ॥१५॥

श्रीभगवानुवाच ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ १६

लोके संसारे क्षरतीति क्षरः विनाशी अक्षरः अविनाशी च इमौ द्वौ एव पुरुषौ स्तः तत्र तयो स्सर्वाणि सम्पूर्णानि ब्रह्मादि स्तम्बपर्यन्तानि भूतानि क्षरः विनाशी, कूटस्थः अविनाशी (मुक्तात्मा) इतिमुनिभि रुच्यते कथ्यते ॥१६॥

इस संसारमें क्षर (नाशवान्) और अक्षर (अविनाशी) ये दोही पुरुष (पदार्थ) प्रसिद्ध हैं. उनमें संपूर्ण भूतोंको क्षर, और उसके मूलभूत प्रकृतिको अक्षर कहा है ॥१६॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७

क्षराऽक्षराभ्यां अन्यस्तु भिन्नस्तु उत्तम उत्कृष्टतमः पुरुषः (परमात्मा) इति नाम्ना उदाहृतः कथितः य ईश्वर अव्ययः अविनाशी सन् लोकत्रयं भूर्भवः स्वराख्य माविश्य प्रविश्य बिभर्ति धारयति ॥१७॥

परंतु उत्तम पुरुष तो इन दोनोंसे अलगही है, कि जिसको अविनाशी, परमेश्वर, और परमात्मा कहागया है; और जो तीनों लोकों में प्रवेश करके सबका धारण पोषण करता है ॥१७॥

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥१८

यस्मात् अक्षर मतीतोऽहं संसारमायावृक्षमश्वत्थाख्यं अतिक्रान्तोऽहं अक्षरादपि संसारबीजभूतादपि चोत्तमउत्कृष्टतमः अस्मि अतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रख्यातः अस्मि ॥१८॥

क्योंकि मैं क्षर से अतीत हूं और अक्षरसेभी उत्तम हूं, इसी वास्ते संसारमे तथा वेदोंमे पुरुषोत्तम नामसे प्रसिद्ध हूं॥१८॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत ॥१९॥

हे भारत हे अर्जुन ! असंमूढो मोहरहितो योजन एवं पूर्वोक्त प्रकारेण पुरुषोत्तमं मां जानाति स जनः सर्ववित् मत्प्राप्त्युपाय वेदकः सर्व भावेन सर्वात्मना मामेव भजति सेवते ॥१९॥

हे अर्जुन, जो पुरुष मोहरहित होकर इस प्रकार मुझको पुरुषोत्तम जानता है, वह सर्वज्ञ है और सब भाव से मुझको ही भजता है, ॥१९॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत २०

हे अनघ हे पापरहित ! इति अनेन प्रकारेण मया ईश्वरेण उक्तं कथितमिदं शास्त्रं गुह्यतम मतिगोपनीय मस्ति हे भारत ! एतच्छास्त्रं बुद्ध्वा ज्ञात्वा बुद्धिमान् कृतकृत्यः स्यात् सफल मनोरथः स्यात् ॥२०॥

हे निष्पाप भारत ऐसा यह जो अत्यंत गुह्य शास्त्र मैंने कहा है; इसको यथावत् जानकर मनुष्य बुद्धिमान् और कृतकृत्य होता है ।

हरिः ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगोनाम पञ्चदशोऽध्यायः ॥१५॥

# षोडशोऽध्यायः ।

## दैवासुरसंपद्विभागयोगः ।

श्रीभगवान् उवाच ॥

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् १
अहिंसा सत्यमक्रोधस्त्यागः शांतिरपैशुनम् ॥
दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥२॥

अभयम् अभीरुता सत्वसंशुद्धिः सत्वस्य अन्तःकरणस्य शुद्धिः ज्ञानयोगव्यवस्थितिः ज्ञानम् शास्त्रत आचार्यतश्च आत्मा वबोधो योगश्चित्तैकाग्रता तयो र्व्यवस्थिति र्व्यवस्थानं (तयो निष्ठेत्यर्थः) दानं यथाशक्ति अन्नादीनां संविभागो दमः इन्द्रियनिग्रहश्च यज्ञश्च श्रौताग्निहोत्रादिः स्मार्तो देवयज्ञादिः स्वाध्यायो वेदाध्ययनं तपस्तपश्चरणं आर्जवं कोमलत्वम् अहिंसा परपीडनाऽभावत्वं सत्यँ यथादृष्टार्थकथनं अक्रोधः क्रोधाऽभाव स्त्यागः सर्वकर्मसंन्यासः शान्तिः अन्तःकरणस्योपशमः अपैशुनं परदोशप्रकाशनाऽभावत्वं भूतेषु प्राणिषु दया कृपा अलोलुप्त्वं लोलुप्त्वाऽभावो मार्दवम् मृदुता

ह्री लज्जा अचापलम् अचांचल्यम् ॥ १॥२ ॥

निर्भयता, अंतःकरणकी संशुद्धि, ज्ञान व योगमें एकनिष्ठता दान, इन्द्रियसंयम, यज्ञ, स्वाध्याय, तप, सरलता, अहिंसा, सत्य, अक्रोध, त्याग, शान्ति, चुगली न करना, प्राणीओंपर दया, विषयों में अलोलुपता, नम्रता, लज्जा, अचपलता तेजस्विता, क्षमा, धैर्य, पवित्रता, निर्वैरता, और निर्मानता ये लक्षण है भारत, दैवीसंपत्तिमें जन्म लेनेवालोंके होते हैं ॥१-२॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवंति संपदं दैवीमभिजातस्य भारत ॥ ३॥

दंभो धर्मध्वजित्वं पाखण्डित्वं दर्पो धनादिजनिताऽभिमानः अतिमानश्च आत्मनि पूज्यताबुद्धिः क्रोधः कोपः पारुष्य मेव च निष्ठुरभाषणम् च अज्ञानम् च अविवेकज्ञानम् मिथ्या प्रत्ययश्च हे पार्थ । एते आसुरीं संपदमभिलक्ष्य जातस्य उत्पन्नस्य पुरुषस्य भवन्ति ॥ २ ॥

तेजस्विता, क्षमा, धैर्य, पवित्रता, निर्वैरता, और निर्मानता ये लक्षण है भारत, दैवीसंपत्ति में जन्म लेनेवालोंके होते हैं, ॥३॥

दंभो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।

अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥४॥

हे पार्थ ! हे राजन ! दम्भः पाखण्डः दर्पः गर्वः अभिमान श्च अहंकारश्च क्रोधश्च चित्तक्षोभश्च पारुष्यं कटुभाषणं च अज्ञानं ज्ञानाऽभावत्वं ( एते गुणाः ) आसुरीं असुरसम्बन्धीं सम्पदां सम्पत्तिं अभिजातस्य उत्पन्नस्य जनस्य एव निश्चयेन भवन्ति ॥४ ॥

और हे पार्थ, दम्भ, गर्व, अभिमान, क्रोध, कठोर वाणी तथा अज्ञान; ये लक्षण आसुरी संपत्तिमें जन्म लेनेवालोंके होते हैं ॥४॥

दैवी संपद्विमोक्षाय निबंधायासुरी मता ।
माशुचः संपदं दैवीमभिजातोऽसि पांडव ॥५॥

हे पाण्डव ! हे अर्जुन ! दैवी संपत् विमोक्षाय संसारबन्धनात् विशेषेण मोक्षाय आसुरी च राक्षसी च संपत् निबन्धाय नियमेन बन्धनाय मता संमता ( अभिमेता ) त्वं अर्जुनः दैवीं संपदं अभिजात उत्पन्नः असि अस्मात् माशुचः शोकम् मा-

कुरु ॥ ५ ॥

इनमें दैवी संपत्ति मोक्षके लिये और आसुरी संपत्ति बन्धन के लिये मानी हुई है. हे पाण्डव, तू दैवी संपत्तिमें उत्पन्न हुआ है, शोक मत कर ॥५॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे श्रृणु ६॥

हे पार्थ ! हे राजन् ! अस्मिन् लोके संसारे भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी द्वौ द्विसँख्याकौ एव निश्चयेन स्तः दैव आसुरश्च तत्र दैवो विस्तरशो विस्तारपूर्वकः पूर्वं प्रोक्तः कथित आसुरँ सर्गं मे मतः शृणु आकरणय ॥६॥

इस लोकमें देव तथा आसुर, यों दो प्रकारके प्राणियोंकी सृष्टि है; उनमें दैवी का विस्तारपूर्वक कथन किया अब हे पार्थ, आसुरी सृष्टिको मुझसे सुन ॥६॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ७।

आसुराः आसुरस्वभावाः जनाः प्रवृत्ति विधिवाक्यं निवृत्ति

निषेधवाक्यं न विदु र्न जानन्ति तेषु जनेषु न शौचं शुद्धि र्विद्यते न च आचारो न सत्यं अपि विद्यते ॥७॥

आसुरी मनुष्य क्या करना और क्या नकरना यह नहीं जानते, और इसलिये उनमें पवित्रता, सदाचार तथा सत्य भी नहीं होता ॥७॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥८॥

ते असुराः जगत् प्राणिजातं असत्यं सत्यवर्जितम् अप्रतिष्ठम् धर्माऽधर्माख्या प्रतिष्ठा आश्रय स्तच्छून्यं अनीश्वरं नविद्यते ईश्वरः कर्ता यस्य तादृश माहुः कथयन्ति अपरश्च परश्चे त्यपरस्परम् स्त्रीपुरुषसंयोग स्तस्माज्जातम् अन्यत् किं न किमपि अत इदं कामहेतुकम् स्त्रीपुंसयोः मिथुनीभावः काम स्तद्ध हेतुर्यस्य तादृशमस्ति ॥ ८ ॥

वे कहते हैं कि जगत असत्य है ईश्वररहित है और परस्परके संयोगसे उत्पन्न हुआ है; इसलिये यह केवल भोगों को भोगनेके लिये नहीं है तो और क्या है। ८॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवंत्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥९॥

नष्टात्मानः कामादिवशेन नष्टधैर्याः अल्पैव बुद्धि र्येषां ते अल्पबुद्धयस्ते असुराः एतां काम हैतुकरूपां दृष्टिं अवष्टभ्य आश्रित्य सर्वेषां अहिताश्शत्रवः उग्रंहिंसाप्रधानं कर्मयेषां ते उग्र कर्माणः सन्तो जगतः संसारस्य क्षयाय नाशाय प्रभवन्ति जायन्ते ९

ऐसी विपरीत दृष्टिका आश्रय करनेसे जिनका सुखभाव नष्ट हो गया है तथा जिनकी बुद्धि अल्प हो गई है ऐसे वे अहितकारी और क्रूरकर्मी मनुष्य केवल जगत् के नाश के लिये ही उत्पन्न होते हैं ॥९॥

काममाश्रित्य दुष्पूरं दंभमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तंतेऽशुचिव्रताः १०

ते दुष्पूरं दुःखेनापि पूरयितुमशक्यं काम मिच्छा विशेष माश्रित्य आश्रयंकृत्वा दंभश्च पाखण्डश्च मानश्च प्रतिष्ठाच मदश्च ते दंभमानमदास्तैयुक्ताः अन्वितास्सन्तः मोहात् अज्ञा नात् असद्ग्राहान् अशुभनिश्चयान् गृहीत्वा आदाय अशु चीनि व्रतानि येषां ते अशुचिव्रता अपेयपानादिरताः कुमार्गेण

पूवर्तन्ते ॥ १० ॥

दंभ, मान, और मदसे युक्त तथा भ्रष्ट आचरणवाले वे मनुष्य-कभी पूर्ण न होनेवाली कामनाओंका आश्रय लेकर तथा अज्ञानसे अशुभ निश्चयोंको ग्रहण करके संसारमें वर्तते हैं ॥१०॥

चिंतामपरिमेयां च प्रलयांतामुपाश्रिताः ।
कामोपभोगपरमा एतावदितिनिश्चिताः ॥११॥

अपरिमेयां अपरिच्छिन्नां पूलययान्तां मरणान्तां चिन्तामुपाश्रिता अहर्निशं चिन्तापराः तथा कामोपभोग एव परमः फलरूपो येषान्ते कामोपभोगपरमाः कामभोग एव परमपुरुपार्थ इति मन्वाना एतावदिति निश्चिताः इतोऽधिकः पुरुपार्थो नविद्यते इति जातनिश्चयाः ॥ ११ ॥

विषयोंके उपभोगमें लगे रहनेवाले तथा संसार में यही सब कुछ है, ऐसे निश्चयवाले वे मरणपर्यन्त रहनेवाली अपार चिंताओंमें डूब रहते हैं ॥११॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहंते कामभोगार्थमन्यायेनार्थसंचयान् ॥१२॥

आशा एव पाशास्तःशतै राशापाशशतै र्बद्धाः नियन्त्रिताः कामक्रोधौ पर मयनं पर आश्रयो येषान्ते कामक्रोधपरायणाः कामभोगार्थं कामभोगप्रयोजनाय अन्यायेन परद्रव्यापहरणेन अर्थ संचयान् धनसमूहान् इहन्ते चेष्टन्ते ॥ १२ ॥

तथा आशारूप सैंकड़ों पाशोंसे बंधे हुए और काम-क्रोध परायण हुए वे विषयभोगों की वृद्धिके लिये अन्याय से धनादिक बहुतसे पदार्थोंका संग्रह करने की चेष्टा करते हैं ॥ १२॥

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

मया कृतप्रयत्नेन अद्य इदानीं इदं धनं लब्धं प्राप्तं अह मिदं मनोरथम् मनसइष्टं प्राप्स्ये लप्स्ये इदं धनं मे मम ( तुष्टिकरं ) अस्ति पुनरपि इदं धनं मे मम आगामि सम्वत्सरे भविष्यति तेनाहं विख्यातोभविष्यामि ॥ १३ ॥

"आज मैंने यहतो पाया, अवइस मनोरथको पाऊंगा; इतना धन है, फिर यहभी मुझे मिलेगा, ॥१३॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥१४

मया असौशत्रुः हतः मारितः अहं अपरान् अन्यान् अपि शत्रून् हनिष्ये नाशयिष्यामि अहमेव ईश्वरः अहं भोगी अहं सिद्धः अहं बलवान् अहं सुखी चासी मद्भिन्नोनास्ति ईश्वरः॥ १४ ॥

इस शत्रुको मैंने मारा, और दूसरों को भी मारूंगा; मैं स्वामी हूं, मैं सिद्ध हूं, मैं बलवान् हूं, मैं सुखी हूं ॥१४॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्तिसदृशोमया
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः।

अहं आढय धनवान् अभिजनवान् कुलीनोऽस्मि मया सदृशस्तुल्योऽन्यो मद्भिन्नः कोऽस्ति नकोपि इत्यर्थः अहं यक्ष्ये यागेनापि अन्यान् अभिभविष्यामि अहं दास्यामि अभिमानेन दानं करिष्यामि नटादिभिः सह मोदिष्ये हर्षं प्राप्स्यामि इति अनेन प्रकारेण अज्ञानविमोहिताः अज्ञानविमूढाः मन्यन्ते ॥१५

मैं धनाढ्य हूं, मैं बड़ा कुलीन हूं, मेरे तुल्य दूसरा कौन है, मैं यज्ञ करूगा, दान करूगा, आनन्द करूगा; इस प्रकारके अज्ञानसे

अत्यन्त मोहित रहनेवाले ॥१५॥

अनेकचित्तविभ्रांता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचौ ॥१६॥

उक्त प्रकारैः रनेकैः शिचत्तैः विविधप्रकारेण भ्रान्ताः अनेकचित्तविभ्रान्ताः भ्रमा मापन्नाः मोहोऽज्ञान मेव जालं अवरणात्मकं तेन समावृता आच्छादिताः कामभोगेषु प्रसक्ता आसक्ताः जना अशुचौ नरके पतन्ति ॥१६॥

वह अनेक प्रकारसे भ्रान्त हुए चित्तवाले, मोहरूप जालमें अत्यंत फंसे हुए और विषयभोगोंमें अति आसक्तिवाले मनुष्य अपवित्र नरकमेंही गिरते हैं ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजंते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥

आत्मना एवसंभाविता आत्मसंभाविताः स्वेनैव स्वस्य प्रशंसां कुर्वाणाः स्तब्धा अनम्राः धनमानमदान्विताः धनेन यो मानः मदश्च ताभ्यां अन्विताः युक्तास्ते दम्भेन पाखण्डेन अविधिपूर्वकं विधिरहितं नामयज्ञैः नाममात्रयज्ञैः देवान् यजन्ते पूज

यन्ति ॥१७॥

अपने को बड़ामाननेवाले, नम्रतारहित, तथा धन और मानके मदवाले वे लोग नाममात्रके विधिरहित यज्ञोंद्वारा दंभसे यजन करते हैं ॥ १७॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८॥

अहंकारं अभिमानं बलं स्वसामर्थ्यं दर्पं गर्वं कामं क्रोधं च संश्रिताः आश्रयकारिणः सन्तः आत्मपरदेहेषु स्वदेहेषु परदेहेषु च स्थितं मां ईश्वरं प्रद्विषन्तः द्वेषं कुर्वन्तः अभ्यसूयकाः निन्दकाः सन्ति ॥१८॥

अहंकार, बल घमंड, काम तथा क्रोध मे हुये हुए तथा दूसरों की निंदा करनेवाले वे आसुर मनुष्य अपने और दूसरोंके शरीरमें स्थित मुझ अन्तर्यामीस द्वेष करनेवाले हैं ॥ १८ ॥

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥

अहमीश्वरः द्विषतो द्वेषं कुर्वतः क्रूरान् अशुभान् अशुभकर्म

विधायकान् नराधमान् अतीव नीचान् संसारेषु जगत्सु अजस्रं सततं आसुरीषु क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु प्रक्षिपामि पातयामि ॥१९॥

उन द्वेष करनेवाले, निर्दयी तथा अशुभकर्म करनेवाले नराधमोंको मैं इस संसार में वारंवार आसुरी योनियों में ही फेंकता हूं ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥
मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् २०

हे कौन्तेय! हे कुन्तीपुत्र! ते मूढाः मूर्खाः जन्मनि जन्मनि प्रति जन्मसु आसुरीं तमोबहुलासु योनिषु आपन्नाः जायमानाः सन्तः मां ईश्वरं अप्राप्य ततस्तस्मादपि अधमां अतिनीचां गतिंयान्ति प्रासुवन्ति ॥२०॥

हे कौन्तेय, इसप्रकार प्रत्येक जन्ममें आसुरी योनिको प्राप्त हुए वे मूढजन मुझको न पाकर उससेभी अधम गति को प्राप्त होते हैं ॥ २०

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥

कामःक्रोधः तथा-लोभः इति इदं त्रिविधं त्रिप्रकारं नरकस्य द्वारं प्रवेशमार्गं आत्मनः नाशनं च अस्ति तस्मात् कारणात् एतत्त्रयं पूर्वोक्तं त्यजेत् परित्यागं कुर्यात् ॥२१॥

इस प्रकार काम, क्रोध और लोभ, ये अपनाही नाश करने वाले नरकके तीन प्रकारके द्वार हैं, इसलिये इन तीनोंको त्याग देना चाहिये ॥ २१ ॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ॥
आचरत्यात्मनः श्रेयस्ततो याति परांगतिम्॥२२

हे कौन्तेय ! नरः जनरेतैः कामक्रोधलोभैस्त्रिभिस्त्रित्व संख्याकैः तमोद्वारैः नरकद्वारैर्विमुक्तःसन् आत्मनः स्वस्य श्रेयः कल्याणं आचरति ततः परां उत्कृष्टां गतिं मोक्षं याति प्राप्नोति ॥२२ ॥

हे कौन्तेय इन तीनों नरकद्वारों से छूटा हुआ मनुष्यही अपने कल्याणके अर्थ, निष्काम भावसे शुभाचरण कर सकता है, और इससे परम गतिको प्राप्त होता है, ॥ २२ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् २३

यो जनश्शास्त्रविधिं वेदशास्त्राज्ञा मुत्सृज्य परित्यज्य काम कारतः स्वेच्छा मार्गेण वर्तते सो जनः सिद्धिं चित्तशुद्धिं न आप्नोति न सुख माप्नोति न परां उत्कृष्टां गतिं मोक्षं च आप्नोति प्राप्नोति ॥ २३ ॥

जो शास्त्रविधिको छोडकर यथेच्छ वर्तता है वह न सिद्धिको पाता है, न सुखको पाता है और न उत्तम गतिकोही प्राप्त होता है ॥ २३ ॥

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्मकर्तुमिहार्हसि ।२४**

तस्मात्कारणात् ते तव कार्याकार्यव्यवस्थितौ इदं कार्यं इदं अकार्यं इति व्यवस्थायां शास्त्रं प्रमाण मस्ति अतः शास्त्र विधानोक्तं शास्त्र प्रतिपादितविधानं ज्ञात्वा बुद्ध्वा इह लोके कर्म कर्तुं अर्हसि योग्यो भवसि ॥२४॥

इसी लिये कार्य और अकार्य की व्यवस्था में शास्त्र को ही प्रमाण जान कर इस संसार में तुझे शास्त्र विधि में कहे हुए कर्मही करने चाहियें ॥२४॥

हरि ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्म विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेदैवासुर संपद्विभागयोगो नाम षोडशोऽध्यायः १६ ।

# सप्तदशोऽध्यायः ॥

अर्जुन उवाच ।

**ये शास्त्रविधिमुत्सृज्य यजंते श्रद्धयान्विताः**
**तेषां निष्ठा तु का कृष्ण सत्वमाहो रजस्तमः॥१॥**

हे कृष्ण ! ये जनाः शास्त्रविधिं शास्त्रोक्तविधानमुत्सृज्य परित्यज्य श्रद्धया भक्तया अन्विता युक्ताः सन्तो देवान् यजन्ते पूजयन्ति तेषां जनानां तु का निष्ठा कीदृशी स्थितिः सत्वं सात्विकी आहोस्वित् रजो राजसी किम्वा तमस्तामसी इति पदं ॥ १ ॥

परंतु हेकृष्ण, जो लोग शास्त्रविधिको छोड़कर केवल श्रद्धा से युक्त हुए यजनपूजन करते हैं, उनकी निष्ठा कैसी है ? सात्विकी, राजसी वा तामसी ? ॥१॥

श्रीभगवान उवाच ॥

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्विकी राजसी चैव तामसी चेति तां शृणु २**

सात्विकी राजसी चेति त्रिविधा त्रिप्रकारा एव श्रद्धा भक्तिर्भवति सा भक्तिर्देहिनां देहाभिमानवतां स्वभावाज्जायते इति स्वभावजा धर्माऽधर्मविशेषैरुत्पन्ना अस्ति व्याख्यास्यमानां तां श्रद्धां मतः शृणु निशामय ॥ २ ॥

देहधारियोंकी वह स्वभावजन्य श्रद्धा सात्विकी, राजसी और तामसी ऐसे तीनों प्रकार की होती है उसको सुन ॥२॥

सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥३॥

हे भारत ! हे अर्जुन ! सर्वस्य प्राणिमात्रस्य श्रद्धा भक्तिः सत्वानुरूपा यथागुणविशिष्टान्तःकरणरूपा भवति अयं पुरुषः श्रद्धामयः श्रद्धाप्रधानोऽस्ति योजनः यच्छ्रद्धः यया श्रद्धया उपेतः स जनः स एव भवति यस्य यादृशी श्रद्धा भवति सः पुरुषः तदेव भवति इति भावः ॥ ३ ॥

हे भारत, सभी मनुष्यों कीश्रद्धा उनकी बुद्धि के अनुसार होती है और जसी जिसकी श्रद्धा होती है वह वैसाही होजाता है अर्थात् यह मनुष्य श्रद्धामय ही है ॥३॥

यजंते सात्विका देवान्यक्षरक्षांसि राजसाः ।

प्रेतान्भूतगणांश्चान्ये यजंते तामसा जनाः॥ ४॥

सात्विकाः सत्वप्रधानाः देवान् शिवादीन् यजन्ते पूजयन्ति राजसाः रजोगुणयुक्ताः यक्षरक्षांसि यजन्ते पूजयन्ति अन्ये च तामसाः तमोगुणविशिष्टा जनाः प्रेतान् भूतगणान् भूतसमूहान् पूजयन्ति ॥ ४ ॥

सात्त्विक पुरुष देवोंको पूजते हैं, रजोगुणी यक्ष और राक्षसों को तथा अन्य तमोगुणी मनुष्य प्रेतों और भूतगणों को पूजते हैं ॥४॥

अशास्त्रविहितं घोरं तप्यंते ये तपो जनाः।
दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥५ ॥
कर्षयंतः शरीरस्थं भूतग्राममचेतसः ।
मां चैवांतःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥

दम्भश्च अहङ्कारश्च दम्भाहङ्कारौ ताभ्यां संयुक्ता इति दम्भाहङ्कारसंयुक्ताः पाखण्डाभिमानसमन्विता स्तथा कामरागौ विषयाभिलाषौ बलं साहसं तैः अन्विताः संयुक्ता ये जनास्ते अशास्त्रविहित मशास्त्रोक्तंघोरं पीडाकरं तपस्तप्यन्ते निर्वर्तयन्ति

ते अचेतसोऽविवेकिनः शरीरस्थं देहस्थं भूतग्रामं पञ्च महाभूतं अन्त शरीरस्थं आभ्यन्तरविराजमानं मां जीवरूप मेव कर्षयन्तः क्लेशयन्तश्च सन्ति तान् आसुरोनिश्चयो येषां ते आसुरनिश्चयास्तान् विद्धि जानीहि ॥ ६ ॥

दंभ और अहंकार से युक्त तथा काम और रागके बलसे प्रेरित हुए जो अविवेकी लोग शास्त्रविधिसे रहित घोर तप तपते हैं और शरीरमें स्थित भूतसमूह को तथा अन्तःकरणमें स्थित मुझ अंतर यामी को भी कृश करते हैं उनको आसुरी निश्चय ( बुद्धि ) वाले जान ॥५,६॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥७॥

सर्वस्य प्राणिजातस्य आहारोपि भोजनमपि त्रिविधस्त्रिप्रकारः प्रिय इष्टो भवति तथा यज्ञस्तपो दानं एतदपि त्रिविधं भवति तेषां सर्वेषामिमं वक्ष्यमाणं भेदं शृणु निशामय ॥ ७ ॥

आहार सबको तीन प्रकार का प्रिय होता है और यज्ञ, तप तथा दानभी त्रिविध होते हैं, उनके भेदको सुन ॥७॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।

रस्याः स्निग्धाः स्थिरा हृद्या आहाराःसात्विक प्रियाः ॥८॥

आयुर्जीवनं सत्वमुत्साहो बलं शक्तिरारोग्यं रोगादि राहित्यं सुखञ्चित्तप्रसादः प्रीतिरभिरुचिरेतेषां विवर्धना वृद्धि करास्ते आयुः सत्वबलारोग्यसुखप्रीतिविवर्धनाः रस्याः रसोपेताः स्निग्धाः स्नेहवन्तः स्थिरा देहे चिरकालस्थायिनो हृद्याः हृदयप्रिया आहारा भोजना घृतक्षीरसितादयः सात्विकं प्रिया भवन्ति ॥८॥

आयु, बुद्धि, बल, आरोग्य, सुख और प्रीतिको बढाने वाले; तथा सुरस, चिकने, पौष्टिक और हृदय को प्रसन्न करनेवाले आहार सात्त्विक जनोंको प्रिय होते हैं ॥८॥

कट्वम्ललवणात्युष्ण तीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकभयप्रदाः॥९॥

कटुः तिक्तोऽम्लः क्षारः लवण रुत्युष्णः तीक्ष्णः मरिचादिः रूक्षः स्नेहशून्यो विदाहिनः संतापकः एवंभूताः आहाराः भोजना राजसस्य रजोगुणयुक्तस्य इष्टाः प्रियाः भवन्ति

तेच भोजना दुःखं च शोकश्च आमयश्च रोगश्च तान् प्रददति इति दुःखशोकामयप्रदाः दुःखशोकरोगजनकाः भवन्ति ॥९॥

कडुए, खट्टे, लवणवाले, गरमागरम, तीक्ष्ण, रूखे, दाह कारक तथा दुःख शोक और रोगको पैदा करने वाले आहार राजसी जनोंको प्रिय हैं ॥९॥

**यातयामं गतरसं पूति पर्युषितं च यत् ।**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥**

यत् भोजनं यातयामं चिरकालावस्थितं गतरसं त्यक्तस्वाभाविकरसं पूति दुर्गन्धं पर्युषितं वासितं च (दौर्गन्ध्ययुक्तं) उच्छिष्टं भुक्त्वावशेषं च अमेध्यं अपवित्रं अपिभोजनं तामस प्रियं भवति तमोगुण युक्तस्य प्रियो भवति ॥१०॥

अधपका, नीरस, दुर्गन्धयुक्त, बासी, झूठा और अशुद्ध आहार तामसी जनोंको प्रिय होता है ॥१०॥

**अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥११॥**

अफलाकाङ्क्षिभिः अफलार्थिभिः पुरुषैः विधिदृष्टः

शास्त्रबोधितः यो यज्ञः यष्टव्यमेव यज्ञअवश्यमेव निवर्तनीयः इति मनः चेतः समाधाय निश्चलं कृत्वा इज्यते निर्वर्त्यते स सात्विको यज्ञः उच्यते ॥ ११

यज्ञ करना कर्तव्य ऐसा मनका समाधान पूर्वक फलाशारहित पुरुषद्वारा जो शास्त्रनियतयज्ञ किया जाता है, वह सात्त्विक है, ११

अभिसंधाय तु फलं दंभार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्॥१२

हे भरतश्रेष्ठ ! यत्तु स्वर्गादिकं फलं अभिसंधाय उद्दिश्य अपिच अन्यच्च दम्भार्थं लोके स्वमख्यापनार्थमेव इज्यते अनुष्ठीयते तं यज्ञं राजसं विद्धि जानीहि ( तत्कर्तारश्च राजसा ज्ञेयाः ॥ १२ ॥

परंतु हेभरतश्रेष्ठ, जो यज्ञ फलेच्छा रख कर अथवा दंभकेही लिये ( लोगोंको बडाई दिखानेको ) किया जाता है उसको तू राजसो जान ॥१२॥

विधिहीनमसृष्टान्नं मंत्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥१३॥

विधिहीनं वेदोक्तविधिरहितं ब्राह्मणेभ्यो न सृष्टं न दत्तं अन्नं इति असृष्टान्नं मन्त्रहीनं मन्त्रैर्देवताह्वानादिरूपैः हीनं शून्यं अदक्षिणं दक्षिणा रहितं तथा श्रद्धाहीनं ( एवं भूतं ) यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३॥

शास्त्रविधिसे हीन, अन्नदानरहित, मंत्रहीन, दक्षिणारहित और श्रद्धाशून्य यज्ञको तामस यज्ञ कहते हैं॥१३॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥१४॥

देवाश्च द्विजाश्च ब्राह्मणाश्च गुरवश्च प्राज्ञाश्च विद्वांसश्च ते देवद्विजगुरुप्राज्ञास्तेषां पूजनं शौचं शुद्धिः आर्जवं कोमलत्वं ब्रह्मचर्यं अहिंसा परपीडनाऽभावः इदं तपः शारीरं शरीरसम्बन्धि उच्यते कथ्यते ॥ १४ ॥

देव, द्विज, गुरु और ज्ञानी जनोंका पूजन, तथा पवित्रता, सरलता, ब्रह्मचर्य और अहिंसा; यह शरीरसंबंधी तप कहा जाता है॥१४॥

अनुद्वेगकरं वाक्यं सत्यंप्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥१५॥

यद्व वाक्यं वचनं अनुद्वेगकरं प्राणिनां अदुःखकरं सत्यं तथ्यं प्रियहितं प्रियं हितं च तथा स्वाध्यायाभ्यसनं स्वाध्यायस्य वेदस्य अभ्यसनं पठनं तत् एव तपः वाङ्मयं वाचः संबंधि उच्यते कथ्यते ॥ १५ ॥

उद्वेगको न करनेवाला, सत्य, प्रिय और हितकर वाक्य, तथा पारमार्थिक ग्रन्थादिकाभ्यास, वह वाणीसंबंधी तप कहा जाता है ॥१५॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥१६।

मनः प्रसादः चेतः शान्तिः सौम्यत्वं प्रत्युत्थाननमस्कारादिः ( परहितैषित्वं ) मौनं वाक्संयमः आत्मविनिग्रहः मनोनिरोधः। भावशुद्धिः परैः सह व्यवहारकाले माया राहित्यं इति एतद् मानसं मनोनिर्वृतं तप उच्यते कथ्यते ॥ १६ ॥

मनकी प्रसन्नता, शांतभाव, मौन, मनोनिग्रह और भावोंकी पवित्रता, यह मन संबंधी तप कहा जाता है ॥१६॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः।
अफलाकांक्षिभिर्युक्तैः सात्विकं परिचक्षते॥१७

यत् शारीरादिकं त्रिविधं त्रिप्रकारकं तपः अफलाकाङ्क्षिभिः फलेच्छारहितैः युक्तैःसमाहितैः नरैः जनैः परया उत्कृष्टया श्रद्धया भक्त्या तप्तं अनुष्ठितं तत् तपः सात्विकं सत्वनिर्वृत्तं परिचक्षते कथयन्ति ॥१७॥

फलाकांक्षारहित योगिजनोंद्वारा परम श्रद्धापूर्वक तपा हुआ यह तीनों प्रकारका तप सात्त्विक कहाता है ॥१७॥

सत्कारमानपूजार्थं तपो दंभेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ।१८

यत् तपः सत्कारश्च मानश्च पूजा च तासां अर्थं प्रयोजनार्थं इति सत्कारमानपूजार्थं च दम्भेन पाखण्डेनैवक्रियते विधीयते तत् तपः इह लोके राजसं रजोगुण निर्वृत्तं चलं विनाशी अध्रुवं अनिश्चित्तफलं उच्यते ॥ १८ ॥

जो तप सत्कार, मान और पूजाके अर्थ अथवा दंभ से ही किया जाता है वह अस्थिर, क्षणिक और राजस कहा गया है ॥१८॥

मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्॥१९

अथवा यत् तपः मूढग्राहेण दुराग्रहेण आत्मनः स्वस्य पीडया परस्य अन्यस्य उत्सादनार्थं विनाशार्थं वा क्रियते विधीयते तत् तपः तामसं तमोगुणः निर्वृत्तं उदाहृतं कथितम् ॥ १६ ॥

जो तप दुराग्रहसे, मन वाणी शरीर को कष्ट देकर किंवा दूसरे का अनिष्ट करने के लिये किया जाता है वह तामस कहा गया है॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम्॥

यद् दानं दातव्यमित्येवं मनः कृत्वा देशे कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे विदुषि ब्राह्मणे अनुपकारिणे प्रत्युपकार रहिताय दीयते तत् दानं सात्विकं स्मृतं कथितम् ॥ २० ॥

दान देना कर्तव्य है ऐसा जानकर जो दान देश काल और पात्रका विचार करके तथा प्रत्युपकार न करनेवालेको दिया जाता है; वह दान सात्विक कहा गया है ॥२०॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्॥२१

यत्तु दानं समर्पणं प्रत्युपकारार्थं वा मां प्रत्युपकरिष्यती त्येवमर्थं वा पुनश्च फलं मे अस्य भविष्यति इति उद्दिश्य परिक्लिष्टं खेदसंयुक्तं दीयते तद्द राजसं स्मृतम् ॥ २१ ॥

जो दान प्रत्युपकारके लिये, फलका उद्देश रखकर, किंवा क्लेशपूर्वक दिया जाता है; वह राजस कहा गया है ॥२१॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥२२॥

यत् दानं असत्कृतं असत्कारपूर्वकं अवज्ञातं निन्दा पूर्वकं च अदेशकाले अपुण्य देशे आशौचादौ च अपात्रे कुपात्रे दीयते तत् दानं तामसं उदाहृतं कथितम्॥ २२ ॥

जो दान अयोग्य देशकालमें, अपात्रको, सत्काररहित किंवा अवज्ञा पूर्वक दिया जाता है, वह तामस कहा गया है ॥२२॥

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा २३

ओं तत् सत् इति च त्रिविधः त्रिप्रकारोयं ब्रह्मणो निर्देशः नाम्ना पाठः स्मृतः (अर्थात् वेदप्रतिपाद्य कर्मणः

आदौ ओं शब्दस्य प्रयोगः अन्ते च तत्सत् शब्दस्य प्रयोगः कर्तव्यः) तेन त्रिविधेन निर्देशेन वेदाश्च यज्ञाश्च पुरा सर्गादौ विहिताः निर्मिताः ॥ २३ ॥

"ॐ" "तत्" और "सत्" ऐसे तीन प्रकारका नाम ब्रह्मका कहा गया है. आदिकालमें ब्राह्मण, वेद और यज्ञादि उसीसे रचे गये हैं ॥२३॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥२४॥

यस्मात् एतन्नामत्रयपूर्वकं एतेषां विधानं सर्गादौ दृष्टं तस्मात् कारणात् ओमित्युदाहृत्य उच्चार्य ब्रह्मवादीनां वैदिकानां विधानोक्ताः यज्ञदानतपःक्रियाः सततं निरन्तरं प्रवर्तन्ते प्रकर्षेण भवन्ति ॥ २४ ॥

इसलिये ब्रह्मवादियोंकी यज्ञ दान और तपरूप शास्त्रोक्त क्रियायें सर्वदा 'ॐ' ऐसा उच्चारण करके आरंभ होती हैं ॥२४॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्चविविधाः क्रियंतेमोक्षकांक्षिभिः ॥

मोक्षकांक्षिभिः मोक्षार्थिभिः तत् ( इदं कर्म तद्ब्रह्म ) इति अनेन प्रकारेण अनभिसंधाय अनिच्छय ( फलाकांक्षां अकृत्वा ) यज्ञतपःक्रियाः यज्ञक्रियाश्च तपःक्रियाश्च तथा दानक्रियाश्च विविधाः अनेकप्रकाराः क्रियन्ते विधीयन्ते ॥२५॥

मुमुक्षुओंद्वारा फलको न चाहकर नाना प्रकारकी यज्ञ तप तथा दानरूप क्रियायें "तत्" इस नामका उच्चारण करके की जाती है ॥२५॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥

सद्भावे आस्तित्वभावे साधुभावेच उत्तमत्वभावेच सत् इति एतच्छब्द प्रयुज्यते लोके ( श्रेष्ठ कर्मणि सत् शब्दस्य प्रयोगः लोके प्रसिद्धः ) हे पार्थ ! हे राजन् ! प्रशस्ते कल्याण जनके कर्मणि ( सत् ) शब्द युज्यते प्रयुज्यते ॥ २६ ॥

हे पार्थ. परमात्माके यह "सत्" ऐसे नामका प्रयोग सद्भाव में और साधुभावमें किया जाता है तथा मंगल कर्ममें भी "सत्" शब्द योजा जाता है ॥२६॥

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।

कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

यज्ञे यज्ञकर्मणि च या स्थिति निष्ठा तपसि च या निष्ठा दाने च या स्थितिः निष्ठा सा निष्ठा सत् इति नाम्ना उच्यते कथ्यते तदर्थीयं तदर्थकृतं तदर्थीयं ईश्वरप्राप्त्यर्थं कृतं कर्म सत् इत्येव अभिधीयते उच्यते ॥ २७ ॥

यज्ञ, तप और दानमें जो तत्परता है वह "सत्" ऐसे कही जाती है, और उस के कर्म को भी "सत्" ऐसे कहा जाता है ॥२७।

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥

हे पार्थ ! यत् अश्रद्धया श्रद्धां विना हुतं हवनं कृतं ब्राह्मणेभ्यः दत्तं च तथा तपस्तप्तं अनुष्ठितं च तत् प्रेत्य परलोके न फलाय भवति नो इह न इह लोके च सुखाय भवति ॥ २८ ॥

हे पार्थ बिना श्रद्धाके होमा हुआ, दिया हुआ, तप तपा हुआ और जो कुछ किया हुआ है वह "असत्" कहा गया है ऐसा कर्म न तो इस लोकमें और न परलोकमें लाभदायक होता है ॥२८॥

हरि ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्म
विद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्र य
विभागयोगो नाम सप्तदशोऽध्यायः ॥

# अष्टादशोऽध्यायः ॥

अर्जुन उवाच।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

हे महाबाहो ! हे केशिनिषूदन ! केशिनामकदैत्यविनाशक ! हे हृषिकेश ! संन्यासस्य तत्वं याथात्म्यं वेदितुं ज्ञातुं इच्छामि वांच्छामि तथा त्यागस्य तत्वं याथात्म्यं वेदितुं ज्ञातुं इच्छामि अनयोः को भेदः इति ज्ञातुं उत्सहे अहं अर्जुनः इति तात्पर्यम् ॥ १ ॥

हे महाबाहो, हे इन्द्रियों के स्वामी, हे केशीदैत्य को मारनेवाले, मैं पुनःभी संन्यास और त्याग के तत्त्वको अलग अलग जानना चाहता हूं ॥१॥

श्रीभगवान् उवाच ॥

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।

सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

काम्यानां कामनाविषयीभूतानां अश्वमेधादीनां कर्मणां न्यासं परित्यागं कवयः विद्वांसः संन्यासं संन्यासपदवाच्यत्वावच्छिन्नं विदुः जानन्ति तथा सर्वकर्मफलत्यागं सर्वेषां नित्यनैमित्तिकानां अनुष्ठीयमानानां कर्मणां फलस्य परिणामस्य त्यागं ईश्वरार्पणं विचक्षणाः पण्डिताः त्यागं प्राहुः कथयन्ति ॥ २ ॥

पंडित जन काम्यकर्मों के त्याग को संन्यास जानते हैं और विचक्षण पुरुष सब कर्मों के फल के त्याग को त्याग (संन्यास) कहते हैं ॥२॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥

एके मनीषिणः मनोनिगृहसमर्थाः सांख्यमतावलम्बिनः दोषवत् रागादयोदोषाः यथा त्याज्या स्तद्वत् कर्म त्याज्यं त्यक्तव्यं इति प्राहुः कथयन्ति अपरे कर्मवादिनो मीमांसकाः यज्ञदानतपःकर्म न त्याज्यं न त्यक्तुं योग्यं इति प्राहुः वदन्ति ॥ ३ ॥

कोई कोई विद्वान् ऐसा कहते हैं कि सभी कर्म दोषयुक्त हैं इस लिये त्यागने योग्य हैं और दूसरे ऐसा कहते हैं कि यज्ञ, दान और तपरूप कर्म त्यागने योग्य नहीं हैं ॥३॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥४

हे भरतसत्तम ! हे साधुतम ! तत्र कर्मणां त्यागात्यागे विषये विप्रतिपत्तौ सत्यां पृथगोपात्ते त्यागे त्यागविषये मे मम निश्चयं निर्धारितं शृणु निशामय हे पुरुषव्याघ्र ! हि यस्मात् त्यागः त्रिविधः त्रिप्रकारः संपरिकीर्तितः सम्यक्प्रकारेण कथितः ॥ ४ ॥

हे भरतश्रेष्ठ, अब उस त्याग के विषयमें मेरे निश्चयको सुन हे पुरुषश्रेष्ठ, त्याग भी तीन प्रकार का कहा गया है ॥४॥

यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥५॥

कः पुनरसौ निश्चय इत्याह तत् यज्ञः दानं तपः इत्येतत् त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं किन्तु कार्यमेव कर्तव्यमेव ( किंच ) यज्ञः दानं तपश्चैतानि मनीषिणां पावनानि चित्त-

शोधकानि एव भवन्ति ॥ ५ ॥

यज्ञ, दान और तपरूप कर्म त्याज्य नहीं किन्तु वह करने योग्य ही हैं क्योंकि यज्ञ, दान और तप विद्वानों को भी पावन करने वाले हैं ॥५॥

एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मत मुत्तमम् ६

हे पार्थ ! किन्तु एतान्यपि यज्ञदानतपांसि कर्माणि सङ्गं आसक्तिं त्यक्त्वा परित्यज्य फलानि च त्यक्त्वा कर्तव्यानि अनुष्ठेयानि इति मे मम श्रीकृष्णस्य निश्चितं उत्तमं श्रेष्ठं मतं अस्ति ॥ ६ ॥

परन्तु हे पार्थ, ये कर्म भी आसक्ति और फलों को छोड़कर करने चाहिये, ऐसा मेरा निश्चित और उत्तम मत है ॥६॥

नियतस्य तु संयासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागः तामसः परिकीर्तितः ॥ ७॥

किन्तु नियतस्य नित्यस्य कर्मणः संन्यासः परित्यागः न उपपद्यते न युज्यते किंच मोहात् अज्ञानात् तस्य नित्यस्य

कर्मणा परित्यागः विमोचनं तामसः अज्ञानात्मकः परिकीर्तितः कथितः ॥ ७ ॥

नियत कर्मको त्याग करना उचित नहीं है और मोहसे उस का त्याग करना तामस त्याग कहा गया है ॥७॥

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ८**

यो जनः दुःखं दुःखप्रदं इत्येव यत्कर्म कायक्लेशभयात् शरीरदुःखभयात् एव त्यजेत् परित्यागं कुर्यात् सः पुरुषः राजसं रजोनिवृत्तं त्यागंकृत्वा त्यागफलं सर्वकर्मत्यागस्यफलं मोक्षाख्यं नैव लभेत् न प्राप्नुयात् किन्तु नरकं प्रतिपद्यते इतिभावः ॥ ८ ॥

जितने कर्म हैंवे सब दुःखरूप हैं ऐसा समझकर शरीरके श्रम के भयसे कर्मों को छोड़ देवे, वह पुरुष ऐसे राजस त्याग को कर केत्यागके फलको कभी नहीं प्राप्त होता ॥८॥

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**संगं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ॥**

हे अर्जुन ! सङ्गं त्यक्त्वा फलं चैव त्यक्त्वा यत्कर्मनियतं नित्यं कार्यं इति बुद्धया क्रियते निर्वर्त्यते सः एव त्यागः सात्विकः सतोगुणनिवृ तः मतः अभिमतः ॥ ६ ॥

हे अर्जुन, "कर्तव्य है," ऐसा ही जान कर जो नियत कर्म आसक्ति और फल को त्याग कर किया जाता है; वही त्याग सात्विक माना गया है। ६।

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥

यो जनः सत्वसमाविष्टः सत्वेन सत्वगुणेन समाविष्टः सम्यग्व्याप्तः मेधावी बुद्धिमान् छिन्नसंशयः त्यक्तसन्देहोऽस्ति (सः कर्मफलासंगस्य) त्यागी संन्यासी अकुशलं असुखप्रदं कर्म न द्वेष्टि न द्वेषं करोति कुशले च सुखप्रदे च न अनुषज्जते न आसक्तो भवति ॥ १० ॥

जो मनुष्य अपना कर्तव्य पालन करने में दुःखदायी कर्म से द्वेष नहीं करता है और सुखदायी कर्म से आसक्त नहीं होता; वही त्यागी, शुद्ध चित्तवाला, ज्ञानवान् और संशयमुक्त है ॥ १० ॥

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।

यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ११

हि यतः देहभृता शरीरधारिणा पुरुषेण अशेषतः निःशेषेण कर्माणि त्यक्तुं हातुं न शक्यं अतः यो जनः कर्मफलत्यागी कर्मफलत्यागनशीलः स एव त्यागी इति अभिधीयते उच्यते ॥ ११ ॥

देहधारियों से सभी कर्मों का त्याग होना शक्य ही नहीं है; इस लिये जो कर्मों के फल का त्यागी है वही 'त्यागी, करके कहा जाता है ॥ ११ ॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्

अनिष्टं नरकादिकंतिर्यगादिरूपंचइष्टंदेवतादिरूपं मिश्रं मनुष्य जन्मराज्यादिकं एवं कर्मणः कर्मजातीयस्य फलं त्रिविधं त्रिप्रकारं भवति तत्त्रिविधं कर्मणः फलं अत्यागिनां कर्म फलाऽत्यागिनाँ प्रेत्य शरीपातादूर्ध्वं भवति संन्यासिनां परमहंस परिव्राजकानां नतु क्वचिदपि भवति ॥ १२ ॥

सकाम पुरुषों को कर्मका शुभ, अशुभ और शुभाशुभ ऐसे तीन प्रकारका फल मरनेके पश्चात् भी प्राप्त होता है; किन्तु फलेच्छा-

रहित संन्यासियोंको कभी नहीं प्राप्त होता ॥१२

पंचैतानि महाबाहो कारणानि निबोध मे।
सांख्ये कृतांते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥

हे महाबाहो ! सर्वकर्मणां सिद्धये फलावाप्तये सांख्ये त्यागाऽत्याग निर्णायके कृतान्ते कृतस्य कर्मणोऽन्तः समाप्ति र्यत्र स कृतान्तो वेदान्तशास्त्रं तस्मिन् प्रोक्तानि कथितानि एतानि अग्रेप्रोच्यमानानि पंचकारणानि मे मत्तो निबोध जानीहि ॥ १३

हे महाबाहो कर्मो की समाप्ति जिसमें कही हुई है ऐसे वेदान्तशास्त्रमें संपूर्ण कर्मोंकी सिद्धिके लिये कहे हुए इन पांच कारणों को तू मुझसे समझ ले ॥१३॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् १४

तान्येव कारणान्याह—अधिष्ठानं सुखदुःखादीनां आश्रय शरीरं तथा कर्ता कर्तोपाधिलक्षणो भोक्ता ( जीवः ) पृथग्विधं नानाप्रकारकं करणं च श्रोत्रादिकं चेन्द्रियसमूहं विविधाः

अनेकप्रकाराः पृथक्चेष्टाश्च वाय्वीयाः प्राणादिरूपाश्चेष्टाः ( प्राणादिपंचवायूनां व्यापाराः ) अत्र एतेषु मध्ये पंचमं दैवं एव परमात्मैव॥ १४॥

इनमें अधिष्ठान ( शरीर ), कर्ता ( जीव ), इन्द्रियादि भिन्न भिन्न साधन, नाना प्रकारकी न्यारी न्यारी क्रियायें और पांचवां कारण दैव है ॥१४॥

शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः॥१५

नरः मनुष्यः शरीरं च वाक् च मनश्च तैः शरीरवाङ्मनोभिः न्याय्यं वा धर्मयुक्तं शास्त्रीयं वा विपरीतं वा अधर्मयुक्तं अशास्त्रीयं वा यत्कर्म प्रारभते निर्वर्तयति तस्य कर्मणः एते यथोक्ताः पंचहेतवः कारणानि सन्ति ॥ १५ ॥

मन, वाणी और शरीर से मनुष्य जो कुछ भले वा बुरे कर्म को आरम्भ करता है, उसके ये पांचों ही कारण हैं ॥१५॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥१

तत्र तस्मिन् कर्मणि एवमुक्तरीत्या पंचभिः निर्वर्त्येसति यो जनः केवलं आत्मानं कर्तारं कर्तृत्वाश्रयं पश्यति अवलोयति ( आत्मैव कर्ता इति मन्यते ) सः तु दुर्मतिः विपरीत मतिः अकृतबुद्धित्वात् आचार्योपदेशशून्यत्वात् न पश्यति मां नावलोकयति ॥ १६ ॥

परंतु ऐसा होते हुए भी जो मनुष्य असंस्कारी बुद्धि के कारण उस विषय में केवल अपने को (जीव को) ही कर्ता देखता है, वह दुर्बुद्धि यथार्थ नहीं देखता ॥१६॥

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमांल्लोकान्न हंति न निबद्धयते १७

यस्य जनस्य अहंकृतः भावो न अहं करोमि इति भावना न जायते तथा यस्य च बुद्धिः प्रज्ञा कर्मसु न लिप्यते नासक्तो भवति सः जनः इमान् परिदृश्यमानान् लोकान् हत्वाऽपि न हन्ति न मारयति न निबध्यते कर्मणा बन्धनं नाप्नोति ॥ १७ ॥

जिसके अन्तःकरण में "मैं कर्ता हूं" ऐसा भाव नहीं है तथा जिसकी बुद्धि ममत्व से लिपायमान नहीं होती, वह पुरुष इन

लोगों को मार कर भी न तो मारता है, न बंधन में पड़ता है॥१७॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म चोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८

ज्ञायते सर्वविषयं अनेनेति ज्ञानं ज्ञातुं योग्यं ज्ञेयं कर्तव्यं कर्म परिज्ञाता कर्मावबोधको भोक्ता इति त्रिविधा त्रिप्रकारिका कर्मचोदना कर्मणां प्रेरणा अस्ति क्रियतेऽनेनेति करणं वाह्यं श्रोत्रादिसाधकं कर्म यज्ञादिस्वरूपं तथा कर्ता यज्ञादिप्रोक्ता (व्यापारवान्) इति त्रिविधः त्रिप्रकारकश्च कर्मसंग्रहः संगृह्यतेऽस्मिन्निति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः कर्मसमूहो जायते ॥ १८ ॥

(ज्ञाता जानने वाला) ज्ञान (जानना) और ज्ञेय (जानने की वस्तु) ये तीन कर्म में प्रेरने वाले हैं, तथा कर्ता, करण (इन्द्रियादि साधन), और क्रिया, इन तीनों के संयोग से कर्म बनता है॥१८॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि १९

कर्तव्यकर्मविषयकं ज्ञानं, विधीयमानं कर्म ( तस्य कर्मणः)

कर्ता क्रियाणां निर्वर्तकः इति एतत्त्रयमपि गुणभेदतः सात्विका दिगुणभेदेन त्रिधैव गुणसंख्याने सांख्य शास्त्रे प्रोच्यते निरूप्यते तान्यपि ज्ञानादीनि शृणु निशामय ॥ १६ ॥

ज्ञान, कर्म तथा कर्ता ये भी गुणों के भेद से सांख्यशास्त्र में तीन तीन प्रकार के कहे गये हैं उनको भी तू भली प्रकार सुन ॥ १६॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्.

येन ज्ञानेन विभक्तेषु ब्राह्मणक्षत्रियादिनानारूपेषु भूतेषु प्राणिमात्रेषु एकं केवलं अविभक्तं विभागरहितं अपरिणामिनं अव्ययं निर्विकारं भावं चिन्मात्रस्वरूपं ईक्षते सर्वं ब्रह्मैवेद मिति पश्यति तज्ज्ञानं सात्विकं विद्धि जानीहि ॥ २० ॥

मनुष्य जिस ज्ञान से भिन्न२ सारे भूतों में एक, अविभक्त और अव्यय परमात्म भाव को देखता है, उस ज्ञान को सात्विक जान ॥२०॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान्,

वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् २१

यत्तु पृथक्त्वेन भेदेन ( प्रति शरीरं भिन्नोयं आत्मा ) इति ज्ञानं अस्ति येन ज्ञानेन सर्वेषु संपूर्णेषु भूतेषु प्राणिषु पृथग्विधान् पृथक्प्रकारान् नानाभावान् भिन्नः भिन्नः आत्मनः वेत्ति जानाति ( सर्वभूतेषु पृथक् २ आत्मा अस्ति इति बुध्यते ) तज्ज्ञानं राजसं रजोगुणनिष्पन्नं विद्धि जानीहि ॥ २१ ॥

जो ज्ञान सारे भूतों में भिन्न २ प्रकार के अनेक भावों को पृथक् पृथक् करके रहे हुए जानता है, उस ज्ञान को तू राजस जान ॥२१॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥२२॥

यत्तु ज्ञानं एकस्मिन्नेव कार्ये देहे प्रतिमादौ वा कृत्स्नवत् परिपूर्णवत् ( एतावानेवात्मा ईश्वरो वा ) इति सक्तं आसक्तं अहैतुकं निरुपपत्तिकं ( तत्वार्थरहितं ) अल्पं स्वल्पफलकं तज्ज्ञानं तामसं उदाहृतं कथितम् ॥ २२ ॥

परन्तु जो ज्ञान एक ही कार्य (पदार्थ-शरीर-क्रियादि) को

सम्पूर्ण -सर्वस्व-सब कुछ मानकर उसी में आसक्त हो रहता है, तथा जो ज्ञान युक्ति शून्य, तात्पर्य रहित और अल्प तुच्छ है, वह तामस कहा गया है ॥२२॥

नियतं संगरहितमरागद्वेषतः कृतम्।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विक मुच्यते २३

अफलप्रेप्सुना फलाकांक्षारहितेन जनेन यद् वर्णाश्रमोचितं कर्म नियतं नित्यं संगरहितं अभिमानवर्जितं अरागद्वेषतः अरागद्वेषाभ्यां कृतं विहितं तत्कर्म सात्विकं उच्यते कथ्यते ॥ २३॥

निष्काम पुरुष द्वारा जो नियत कर्म आसक्ति रहित होकर तथा बिना राग द्वेष से किया गया है, वह सात्विक कहा जाता है॥२३॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥

कामेप्सुना मोक्षव्यतिरिक्तकर्मफलेच्छुना पुनः साहंकारेण अहंकारयता जनेन वा यत्तु बहुलायासं अतिश्रमकरं कर्म

क्रियते विधीयते तत् राजसं उदाहृतं कथितम् ॥ २४ ॥

जो कर्म फलाकांक्षी अथवा अहंकारी पुरुष द्वारा बहुत परिश्रम से किया जाता है, वह तामस कहा जाता है ॥२४॥

अनुबंधं क्षयं हिंसामनपेक्ष्य चपौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥२५॥

अनुबध्यतेऽनेनेति अनुबन्धं कर्मकरणानन्तरं यद्दुःखादिना बन्धनं भवति तदनुबंधफलं क्षयं शक्तेरर्थानां च नाशं हिंसां परपीडां पौरषं स्वसामर्थ्यं अनवेक्ष्य अनालोच्यमोहात् अज्ञानात् यत् कर्म आरभ्यते तत्तामसं उदाहृतं कथितम् ॥ २५ ॥

जो कर्म परिणाम, हानि, हिंसा और सामर्थ्य को बिना देखे केवल मोह से आरम्भ किया जाता है, वह तामस कहा जाता है ॥२५॥

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते

यो जनः मुक्तः परित्यक्तः संगो आसक्ति येन सः

मुक्तसंगः कर्मणि आसक्तिरहितः अनहंवादी साभिमानोक्ति शून्यः ( अभिमान रहितः ) धृतिः धैर्यं दुःखादिसहनं उत्साहः उद्यमः ताभ्यां समन्वितः युक्तः सिद्ध्यसिद्ध्योः कृत कर्मफलाफलयोः विकाररहितः अस्ति सः कर्ता सात्विक उच्यते कथ्यते ॥ २६ ॥

आसक्ति से मुक्त, अहंभाव रहित, धैर्य और उत्साह से युक्त तथा सिद्धि असिद्धि में हर्ष शोकादि विकारों से रहित कर्ता सात्विक कहाता है।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोशुचिः।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः।

यः कर्ता रागोऽस्यास्तीति रागी विषयाभिलाषी कर्मफलप्रेप्सुः कर्मफलयाचकः लुब्धः परद्रव्येषु संजाततृष्णः हिंसात्मकः परपीड़ाकरः अशुचिः शुद्धिरहितः हर्ष शोकान्वितः हर्ष-विषादाभ्यां युक्तः स जनः राजसः परिकीर्तितः कथितः ॥२७

आसक्त कर्मों के फल को चाहने वाला, लोभी ' हिंसक स्वभाव वाला, अपवित्र और हर्ष शोक के आधीन होने वाला कर्ता राजस कहा जाता है।

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते २८

यः कर्ता अयुक्तः निषिद्धकर्मणि आथिस्तः प्राकृतः असंस्कृत बुद्धिः (अविद्वान् ) स्तब्ध अनम्रः शठः धूर्तः नैष्कृतिकः वंचकः अलसः अनुद्यमी विषादयुक्तः (शोकवान् ) दीर्घसूत्री चिरकार्य कारी सः जनः तामस उदाहृतः कथितः ॥२८॥

अस्थिर चित्तवाला, अशिक्षित, घमंडी, शठ, कपटी, आलसी, शोक करने वाला और दीर्घसूत्री विलंबी) कर्ता तामस कहा जाता है ॥२८॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥२९॥

हे धनंजय ! हे अर्जुन अशेषेण साकल्येन मया पृथक्त्वेन भिन्नत्वेन प्रोच्यमानं कथ्यमानं गुणतः सत्वादिगुणेभ्यः त्रिविधं त्रिप्रकारकं बुद्धेः भेदं धृतेश्चभेदं एव निश्चयेन शृणु निशामय ॥ २९ ॥

हे धनंजय, बुद्धि और धैर्य के भी गुणों के भेद से त्रिविध

भेद कहे हुए हैं, वे सब विभाग पूर्वक सुन ॥२९॥

प्रवृत्तीं च निवृत्तिं च कार्याकार्ये भयाभये ।
बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी

हे पार्थ ! हे राजन् ! या बुद्धिः पूज्ञा प्रवर्तनं प्रवृत्तिः बन्धहेतुः (कर्ममार्गः) निवृतिः निर्मोक्षहेतुः (सर्वत्यागरूपः) कार्याकार्ये कर्तव्याकर्तव्ये तथा भयं च अभयं च भयाभये भयाऽभयस्थाने तथैव बन्धं मोक्षं च या बुद्धिः वेत्ति जानाति साबुद्धिः सात्विकी अस्ति ॥ ३० ॥

हे पार्थ, प्रवृत्ति तथा निवृत्ति को, कार्य तथा अकार्य को, भय तथा अभय को, और बंध तथा मोक्ष को जो बुद्धि यथावत् जानती है, वह सात्वकी है ॥३०॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥

हे पार्थ ! यया बुद्ध्या नरः शास्त्रविहितंधर्मं शास्त्र मृतिसिद्धं अधर्मं च कार्यं च कर्तव्यं च अकार्यं च अकर्तव्यं च अयथावत् अयथार्थत्वेन संदिग्धं प्रजानाति अवबुध्यते

सा बुद्धिः राजसी अस्ति ॥ ३१ ॥

हे पार्थ, जिस बुद्धि के द्वारा मनुष्य धर्म और अधर्म को तथा कार्य और अकार्य को भी यथार्थ नहीं जानता है, वह बुद्धि राजसी है ॥३१॥

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ।

हे पार्थ ! या बुद्धिः तमसा तमोगुणेन आवृता आच्छादिता अधर्मं पापं धर्मं पुण्यं मन्यते सर्वार्थान् सर्वानेव ज्ञातव्यं पदार्थान् विपरीतान् मन्यते सा बुद्धिः तामसी अस्ति ॥३२॥

हे पार्थ, जो तमोगुण से व्याप्त हुई बुद्धि अधर्म को धर्म करके मानती है और सारे अर्थों को विपरीत मानती है, वह बुद्धि तामसी है ।

धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी

हे पार्थ ! नरः अव्यभिचारिण्या विषयान्तराऽभिलाषं

रहितया ( समाधनुगतया ) यया धृत्या धारणया योगेन चित्तवृत्तिनिरोधेन मनः प्राणेन्द्रियः क्रियाः मनश्च प्राणेन्द्रियाणि तेषाँ क्रिया चेष्टा -धारयते चिरं अवस्थापयति सा धृतिःसात्विकी मता ॥३३॥

हे पार्थ, आन्तर धर्म रूप योग से अनन्य प्रीतिवाली जिस धृति द्वारा मनुष्य मन, प्राण, और इन्द्रियोंकी क्रियाओं को वश में रखता है वह धीरज सात्विकी है ॥३३॥

**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।**
**प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसो ॥**

हे पार्थ ! फलाकांक्षी कर्तव्य फलाऽभिलाषुकः नरः प्रसंगेन धर्मादिः सम्बन्धेन यया तु धृत्या धर्मश्च कामश्च ते तान् धर्मकामार्थान् धारयते चिरं अवस्थापयति हे अर्जुन सा धृतिः राजसी अस्ति ॥३४॥

और हे पृथा पुत्र अर्जुन, मनुष्य जिस धीरज के द्वारा बाह्य धर्म को, धनादि पदार्थ को और भोगों को, धारण करता है, तथा प्रसंग मिलने पर फल की आकांक्षा भी करता है वह धीरज राजसी है॥३४॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुंचति दुर्मेधा धृतिः सा पार्थ तामसी ॥

दुर्मेधाः दुर्बुद्धिः पुरुषः यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकं विषादं खेदं च मदं गर्वं एतान् न विमुंचति धारयत्येव सा धृतिः तामसी मता ॥२४॥

हे पार्थ, जिस धीरज के द्वारा दुर्बुद्धि पुरुष निद्रा, भय, शोक, खेद तथा मद को भी नहीं छोड़ता, वह धीरज तामसी है ॥३५॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥

हे भरतर्षभ ! हे भरतश्रेष्ठ ! इदानीं तु अस्मिन्नस्ये तु त्रिविधं त्रिप्रकारकं सुखं मे मतः शृणु निशामय यत्र सुखे अभ्यासात् निरन्तरानुशीलनात् (करणात्) रमते आनन्दानुभवं प्राप्नोति दुःखानां च दुःखस्य अन्तं पारं (ओरँ) निगच्छति एति ॥२६

हे भरत श्रेष्ठ, जिस सुख में मनुष्य अभ्यास से रमण करता है तथा दुःख के अन्त को पाता है, वह सुख भी तीन

प्रकार का है, सो अब मुझ से सुन ॥३६॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥

यत् अनुभवैकवेद्यं वक्तुमशक्यं तत्सुखं अग्रे पूर्वं (अत्यन्तायासपूर्वकत्वात्) विषमिव दुःखात्मकं भवति परिणामे अन्ते (ज्ञानवैराग्यादि पाकदशायां) अमृतोपमं अमृततुल्यं सुखपूदं भवति तत् आत्मबुद्धिपूसादजं आत्मबुद्धिपूसादजनकं सुखं सात्विकं पूोक्तं कथितम् ॥३७॥

जो सुख आरम्भ में विष के समान और अन्त में अमृत के तुल्य है, ऐसा आत्म बुद्धि के प्रसाद से उत्पन्न हुआ सुख सात्विक कहा गया है ॥३७॥

विषयेंद्रियसंयोगात् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ३८

सम्बन्धात् यत्सुखं जायते तत्सुखं अग्रे भोगकाले (पूथमक्षणे) अमृतोपमं अमृततुल्यं अतीवानन्द जनकं परिणामे अन्ते

विषयेन्द्रिय संयोगात विषयाणाँ इन्द्रियाणां च संयोगात् ( बलवीर्य हानि करत्वात् ) विषमिव भवति तत्सुखं राजसं स्मृतं कथितम् ॥

जो सुख विषय और इन्द्रियों के संयोग से होता है, और आरम्भ में अमृत के समान भासता है, परन्तु अन्त में विष के तुल्य होता है, वह सुख तामस कहा गया है ॥३८॥

यदग्रे चानुबंधे च सुखं मोहनमात्मनः।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥३९॥

यत् सुखं अग्रे प्रथम ( भोगदशायां ) पुनः अनुबन्धे च पश्चात् परिणाम दशायां च आत्मनः मोहनंमोह कारकं निद्रा च आलस्यं च प्रमादश्च ते निद्रालस्यप्रमादाः तेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं निद्रालस्यादिभ्य उत्पन्नं तत् सुखं तामसं उदाहृतम् कथितम् ॥३९॥

जो सुख निद्रा, आलस और प्रमाद से उत्पन्न होता है तथा जो आरम्भ और परिणाम में भी आत्मा को मोहित करने वाला है, वह सुख तामस कहा गया है ॥३९॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।

सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ।

यत् सत्वं एकोऽपि प्राणिजातं एभिः पूर्वोक्तैः प्रकृतिजैः प्रकृतितः उत्पन्नैः त्रिभिः त्रित्वसंख्याकैः गुणैः सत्वादिभिः मुक्तं स्यात् परित्यक्तं स्यात् यत् पृथिव्यां वा दिवि स्वर्गे वा पुनः देवेषु अमरेषु न अस्ति न विद्यते ॥ ४० ॥

पृथ्वी में अथवा स्वर्ग के देवताओं में भी कोई प्राणिपदार्थ ऐसा नहीं है, जो इन प्रकृतिजन्य तीन गुणोंसे मुक्त हो ॥४०॥

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥

हे परन्तप ! हे अर्जुन ! ब्राह्मणाश्च क्षत्रियाश्च विशश्च तेषां ब्राह्मणक्षत्रियविशां यज्ञोपवितवेदाध्ययनाधिकारीणां तथा शूद्राणां शूद्रकुलोत्पन्नानां स्वभावप्रभैवः स्वकीयोभावः स्वभावाः ब्राह्मणादि जन्महेतुभूताः पूर्वजन्मकृतकर्मोत्पन्नाःसत्वाद्योः गुणाः तै स्वभावप्रभवै गुणैः सत्वादिभिः कर्माणि कर्तव्यानि प्रविभक्तानि विभागेन रचितानि सन्ति ॥ ४१ ॥

हे परंतप, ब्राह्मण, क्षत्रिय, वैश्य और शुद्रों के कर्मभी उन उनके प्रकृतिजन्य गुणों करके विभक्त किये हुए हैं ॥ ४१ ॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

अन्तःकरणनिग्रहशमः बाह्येन्द्रियनिग्रहो दमः, तपः शरीरक्लेशरूपः ) शौचं शुद्धिः, क्षान्तिः क्षमा, आर्जवं कोमलत्वं शास्त्रीयकर्मविषयज्ञानं, विज्ञानं अनुभवः आस्तिक्यं आस्तिकता, इति एतन्नवकं ब्राह्मणत्वजात्याभिव्यंजकं कर्म स्वभावजं पूर्वजन्मकृतसंस्कारजम् ॥ ४२ ॥

शम ( मनोनिग्रह ), दम ( इन्द्रियनिग्रह ), तप, पवित्रता, क्षमा सरलता, शास्त्रज्ञान, अनुभवज्ञान, और आस्तिकता, ये ब्राह्मणके स्वभावजन्य कर्म हैं, ४२ ॥

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

शूरस्यभावः शौर्यं पराक्रमः, तेजः धृतिः धैर्य, दाक्ष्यं सर्वकर्म कौशलं, युद्धे संग्रामेपि अपलायनं च अपराङ् मुखी भावत्वं, दानं दानशीलत्वं, ईश्वरभावः प्रभुशक्ति प्रकटी करणं ( सामर्थ्य ) इति एतत् क्षात्रं कर्म क्षत्रियस्य कर्म स्वभावजं पूर्वसंस्कारजं भवति ॥ ४३ ॥

शौर्य, तेजस्विता, धीरज, दक्षता, युद्धसे न भागना, दान देना, और ईश्वरभाव, ये क्षत्रियके स्वभावजन्य कर्म हैं ॥ ४३ ॥

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ४४

कृषिश्च भूमेः कर्षणं च गोरक्ष्यं च पशुपालनत्वं च वाणिज्यं च क्रयविक्रयात्मकं च इति कृषिगोरक्ष्यवाणिज्यं वैश्यं कर्म वैश्यजातेः कर्म स्वभावजं पूर्वसंस्कारजं भवति परिचर्यात्मकं शुश्रूषास्वभावात्मकं कर्म कार्यं शूद्रस्यापि शूद्रजातेरपि कर्म स्वभावजं पूर्वजन्मसंस्कारजं भवति ४४

खेती, गौपालन और वाणिज्य, ये वैश्यके स्वभावजन्य कर्म हैं, तथा शूद्रकाभी सेवाविषयक कर्म स्वाभाविक है ॥ ४४

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु ॥

स्वे स्वे स्वकीयेविहिते कर्मणि अभिरतः संलग्नः ( निष्ठावान् ) नरः संसिद्धिं ज्ञानयोग्यतां लभते प्राप्नोति ( मोक्षं गच्छति ) स्वकर्मनिरतः स्वस्मिन् कर्मणि संलग्नः जनः यथा येन प्रकारेण सिद्धिं विन्दति लभते तत्प्रकारं शृणु निशामय ॥ ४५ ॥

अपने अपने कर्मों में अत्यंत निमग्न रहनेवाला मनुष्य संसिद्धि को प्राप्त होता है अब वह स्वकर्मनिरत मनुष्य जिस प्रकार सिद्धि को प्राप्त होता है सो सुन ॥ ४५॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥

यतः यस्मात् ईश्वरसकाशात् भूतानां प्राणिनां प्रवृत्तिः उत्पत्तिर्जायते येन ईश्वरेण इदं सर्वं जगत् ततं व्याप्तं तं जगदीश्वरं स्वकर्मणा स्ववर्णाश्रमोचितधर्मणा अभ्यर्च्य पूजयित्वा मानवः जनः सिद्धिं ज्ञानयोग्यतां ( मोक्षं ) विन्दति लभते ॥ ४६ ॥

जिस परमात्मा द्वारा सारे भूतों की प्रवृत्ति है और जिस करके यह सारा संसार व्याप्त है. उस परमात्मा को सर्वभावसे अपने कर्म द्वारा पूजकर मनुष्य सिद्धि को प्राप्त होता है ॥ ४६ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥

स्वनुष्ठितात् सुष्ठु अनुष्ठितात् कर्तुं शौलभ्यात् ( सम्यग्विहितात् ) परधर्मात् अन्यस्य धर्मात् स्वधर्मः स्वकीय धर्मः

त्रिगुणोऽपि किंचिदंगहीनोऽपि ( स्वल्पफलजनकोपि ) श्रेयान् प्रशस्यतरः स्वभावनियतं पूर्वोक्तत्रिविधस्वभावाज्जातं कर्म कुर्वन् विदधन् सन् किल्बिषं पापं न आप्नोति प्राप्नोति ॥४७॥

भली प्रकार पालन किये हुए दूसरे के धर्म से अपना न्यून गुणवाला धर्म भी कल्याण कारक है; क्योंकि स्वभाव नियत कर्म को करता हुआ मनुष्य पापको नहीं प्राप्त होता ॥ ४७ ॥

सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ।
सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ४८॥

हे कौन्तेय ! हे कुन्तीपुत्र ! सदोषमपि दोषयुक्तमपि सहजं जन्मना सहउत्पन्नं कर्म न त्यजेत् न हापयेत् हि यस्मात् धूमेन अग्निरिव यथा धूमेन अग्निः आवृतः आच्छादितः तथा सर्वारम्भाः सर्वकर्माणि ( सर्वोपायाः ) आवृताः आच्छादिताः ॥४८

इसलिये हे कुंतीपुत्र, स्वभावजन्य कर्म दोषवाला होने पर भी न त्यागना चाहिये; क्योंकि धूप से आच्छादित अग्नि के समान सभी कर्म थोड़े बहुत दोषवाले हैं- ॥४८॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥

यो जनः सर्वत्र सर्वेषुपुत्रदारादिषु कर्मसु न संसक्ता बुद्धिर्यस्य सः असक्तबुद्धिः विरक्तः तथा जितात्मा वशीकृतात्मा. विगता याता स्पृहा इच्छा यस्य सः विगतस्पृहः इच्छारहितो-ऽस्ति सः नैष्कर्म्यं सिद्धिं कर्मफल निवृत्तिरूपां सिद्धिं संन्यासेन त्यागेन गच्छति प्राप्नोति ॥ ४९ ॥

नियत कर्म करता हुआ मनुष्य जब सर्वत्र अनासक्त, स्पृहा रहित और अंतःकरण को जीतनेवाला होता है, तभी वह ज्ञाननिष्ठा द्वारा परम नैष्कर्म्य सिद्धिको प्राप्त होता है, ॥ ४९ ॥

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।**
**समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा ५०**

हे कौन्तेय ! हे कुन्तीपुत्र ! पूर्वोक्तां सिद्धिं प्राप्तः नरः यथा येन प्रकारेण ब्रह्म आप्नोति प्राप्नोति तथा तेन प्रकारेण मे मत्तः समासेन संक्षेपतः निबोध जानीहि या सिद्धिः ज्ञानस्य परा उत्कृष्टा निष्ठा अस्ति उत्तमपर्यवसानभूमिरस्ति ॥ ५० .

हे कुन्तीपुत्र, ज्ञाननिष्ठारूप सिद्धिको प्राप्त हुआ मनुष्य जिस प्रकार परम सिद्धिरूप ब्रह्मको प्राप्त होता है उसीको तू मुझसे संक्षेप से जान जोकि ज्ञानकी पराकाष्ठा है ॥५०॥

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च**

शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च

विशुद्धया वेदान्तश्रवणेन दोषरहितया बुद्ध्या पूज्या युक्तश्च सम्पन्नश्च जनः धृत्या धैर्येण आत्मानं देहेन्द्रियसंघातं नियम्य वशीकृत्य शब्द आदिर्येषां तान् शब्दादीन् शब्दप्रभृतीन् विषयान् त्यक्त्वा परित्यज्य रागश्च द्वेषश्च तौ रागद्वेषौ प्रेमवैरभावौ व्युदस्य त्यक्त्वा॥ ५१ ॥

विशुद्ध बुद्धिवाला मनुष्य धैर्यसे अंतःकरण को वश करके शब्दादि विषयों का त्याग करके और रागद्वेष दूर करके ॥५१॥

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ५२

विविक्तान् गिरिगुहादीन् देशान् सेवितुं शीलमस्येति विविक्तसेवीः एकान्तसेवी लघ्वाशी परिमितभोजनशीलः यतानि वशीकृतानि कायवाङ्मनांसि येन स यतवाक्कायमानसः नित्यं ध्यानं आत्मस्वरूपचिन्तनं योगः आत्मनः पूत्यक्षीकरणं तौ परौ कर्तव्यौ यस्य स ध्यानयोगपरः वैराग्यं विरागभावं समुपाश्रितः सम्यग् आश्रितः ॥ ५२ ॥

एकान्त सेवी, मिताहारी, मन वाणी शरीर को जीतने वाला, नित्य

जब ध्यानयोगपरायण, वैराग्य का आश्रय करने वाला ॥५२॥

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ५३**

अहंकारं अभिमानं बलं सामर्थ्यं दर्पं गर्वं कामं विषय भोगरूपं क्रोधं निष्ठुरवाक्य रूपं परिग्रहं कुटम्बादिकं विमुच्य परित्यज्य निर्ममः ममतारहितः शान्तः जितचित्तः ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥ ५३ ॥

तथा अहंकार, बल, गर्व, काम, क्रोध और संग्रह को त्याग करने वाला और सर्वत्र ममता रहित तथा शान्त चित्त वाला होता है, तभी वह ब्रह्म भाव के समझने में समर्थ होता है ॥५३॥

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।**
**समः सर्वेषु भूतेषु मद्भक्ति लभते पराम् ५४**

ब्रह्मभूतः ब्रह्मभावंगतः प्रसन्नात्मा प्रसन्नचित्तः न शोचति न शोकं करोति न कांक्षति न अप्राप्तवस्तु अभिलषति सर्वेषु सम्पूर्णेषु भूतेषु समस्तुल्यः सन् परां उत्कृष्टां मद्भक्तिं ममेश्वरस्य भक्तिं लभते प्राप्नोति ॥ ५४ ॥

ऐसा ब्रह्म विचार में स्थित हुआ प्रसन्न चित्त वाला पुरुष न तो किसी वस्तु का शोक करता है, और न आकांक्षा करता है, एव सारे भूतों में सम भाव वाला होकर मेरी भक्ति को प्राप्त होता है ॥ ५४ ॥

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः
ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ५५

मद्रूपतः स्वभावतश्च योऽहं यादृगहं गुणतो विभूतितो वा यावांश्चाहं यत्परिमाणवच्छेदकाः छिन्नं चास्मि तं मामीश्वरं एवंरूपया भक्त्या तत्वतः याथातथ्यतः अभिजानाति बुद्ध्यते ततः तदनन्तरं मां परमेश्वरं तत्वतः तत्त्वपूर्वकं ज्ञात्वा बुद्ध्वा तदनन्तरम् स्वरूपज्ञानानन्तरं मां जगदाधारं विशते सत्स्वरूपो भवति ॥ ५५ ॥

मैं जैसा और जिस प्रभाव वाला हूं, वैसा मुझे वह पराभक्ति के द्वारा यथावत् जानता है, और इस प्रकार मुझे तत्त्व से जानकर तत्काल मुझ में प्रवेश करता है ॥ ५५ ॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ५६॥

अहं ईश्वर एव आश्रयो यस्य स मद्व्यपाश्रयः (ममेश्वराश्रितः) सर्वाणि सम्पूर्णानि कर्माणि सर्वकर्माणि अपि सदा प्रतिदिनं कुर्वाणः अनुतिष्ठन् सन् मत्प्रसादात् ममेश्वरस्य प्रसादात् शाश्वतं नित्यं अव्ययं अविफलं पदं मोक्षं अवाप्नोति प्राप्नोति ॥ ५६ ॥

मनुष्य मेरा आश्रित हो कर सर्वदा सब कर्मोंको करता हुआ भी इस प्रकार मेरी प्रसन्नता से सनातन अविनाशी पद को प्राप्त होता है ॥ ५६ ॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥५७॥

अहं वासुदेवः पर उत्कृष्टो यस्य स मत्परः मदाराधनापरः सन् चेतसा मनसा सर्वकर्माणि सम्पूर्णकर्माणि मयि वासुदेवे संन्यस्य समर्प्य बुद्ध्या प्रज्ञया योगं उपाश्रित्य सततं निरन्तरं मच्चित्तं मय्येवचित्तं यस्य तादृशो भव ॥ ५७ ॥

तू भी सब कर्मों को मन से मुझ को अर्पण करके मुझे ही सर्व श्रेष्ठ मानता हुआ, बुद्धि योग का आश्रय करके निरन्तर मुझ में चित्त वाला हो ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।

अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥

मच्चित्तः मयिसमर्पितचित्तस्त्वं मत्प्रसादात् ममेश्वरस्य अनुग्रहात् सर्वदुर्गाणि सम्पूर्णजन्महेतुकानि कष्टानि तरिष्यसि पारं उत्तरिष्यसि अथ चेद्यदि त्वं अर्जुनः अहंकारात् अभिमानात् मे मम वासुदेवस्य वचः वचनं न श्रोष्यसि निशामयिष्यसि ( तर्हि ) विनंक्ष्यसि विनष्टो भविष्यसि ॥ ५८ ॥

मुझ मे चित्त वाला हो कर तू मेरी कृपा से सारे संकटों को तर जायगा, और यदि अहंकार से मुझे न सुनेगा तो नष्ट हो जायगा ॥ ५८ ॥

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ।

यत् यदि अहंकारं अभिमानं आश्रित्य न योत्स्ये युद्धं न करिष्ये इति मन्यसे ( तदा ) एषः ते तव व्यवसायः निश्चयः मिथ्या असत्यरूपः त्वां अर्जुनं युद्धादौ प्रकृतिः क्षात्रस्वभावः नियोक्ष्यति प्रवर्तयिष्यति ॥ ५९ ॥

अहंकार का आश्रय करके जो तू ऐसे मानता है कि मैं युद्ध नहीं करूगा, सो यह तेरा निश्चय मिथ्या है, क्योंकि तेरा क्षात्रस्वभाव तुझे अवश्य युद्ध में प्रवृत्त करेगा ॥ ५९ ॥

स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपितत्

हे कौन्तेय ! हे कुन्तीपुत्र ! यत् . युद्धं मोहात् अज्ञानात् कर्तुं न इच्छसि न वांछसि तत् (एवं युद्धं त्वं) स्वभावजेन क्षत्रियस्य स्वभावजातेन शौर्याख्येन स्वेन स्वकीयेन कर्मणा निबद्धः यन्त्रितः सन् अवशोऽपि परवशोऽपि करिष्यसि ॥ ६० ॥

हे कौंतेय, जिस कर्म को तू मोह से नहीं करना चाहता है, उस को भी अपने स्वभाव जन्य कर्म से बन्धा हुआ परवश हो कर करेगा ॥ ६० ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रमयन्सर्वभूतानि यंत्रारूढानि मायया ॥६१॥

हे अर्जुन ! ईश्वरः ईशनशीलो नारायणः माययाछद्मना यन्त्रारूढानि शरीररूपयन्त्रे स्थितानि सर्वभूतानि सम्पूर्ण प्राणिजातानि भ्रामयन् भ्रमणं कारयन् सर्वभूतानां सर्वप्राणिनाँ हृद्देशे हृद्-देशे तिष्ठति स्थितिं करोति ॥ ६१ ॥

हे अर्जुन, शरीर रूप यंत्र में चढ़े हुये संपूर्ण प्राणियों को अपनी माया से भ्रमाता हुआ ईश्वर सब भूत प्राणियों के हृदय में स्थित है, ॥६१॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम्

हे भारत ! हे भरतकुलोत्पन्न ! सर्वभावेन सर्वात्मना तमेश्वरं शरणं आश्रयं गच्छ एहि तत्प्रसादात् तस्येश्वरानुग्रहात् परां प्रकृष्टां शान्ति उपरतिं शाश्वतं नित्यं स्थानं विष्णोपदं प्राप्स्यसि अवाप्स्यसि ॥ ६२ ॥

हे भारत, तू सर्व भाव से, उस की शरण को प्राप्त हो, उस की कृपा से तू परम शान्ति को और शाश्वत धाम को प्राप्त होगा ॥ ६२॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥६३॥

एतत् यथोक्तं शास्त्रं अशेषेण साकल्येन विमृश्य विमर्शनं (आलोचनं) कृत्वा मया श्रीवासुदेवेन इति पूर्वोक्तं गुह्यात् गोप्यात् गुह्यतरं अतीव गोप्यं ज्ञानं ते तुभ्यं अर्जुनाय आख्यातं सम्यग्निवेदितं इदानीं यथा इच्छसि यादृशीतवेच्छा वर्तते तथा कुरु तथैव विधेहि ॥ ६३ ॥

इस प्रकार मैंने तुझ को यह गुप्त से भी अति गुप्त ज्ञान

कहा है, अब उस का संपूर्णता से विचार करके जैसी इच्छा हो वैसा कर ॥ ६३ ॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः
इष्टोऽसि मे दृढमति ततो वक्ष्यामि ते हितम् ॥

सर्वगुह्यतमं सम्पूर्णगुह्येभ्योऽपि अत्यन्तगोप्यं मे मम वासुदेवस्य परमं प्रकृष्टं ( अतीवफलजनकं ) वचः वचनं भूयः पुनः शृणु निशामय ( यतः त्वं ) मे मम दृढमतिः दृढबुद्धिः ( अप्रियकरणेऽपि अन्यथा भावरहितः ) इष्टोऽसि प्रियोऽसि अतः तस्मात् ते हितं हितकरं वक्ष्यामि कथयिष्यामि ॥ ६४ ॥

फिर तू सब से अति गुह्य मेरे परम वचन को सुन, तू मुझे अत्यन्त प्रिय है, इस लिये यह हितकारक वचन तुझे कहूंगा ॥ ६४॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥

मन्मनाः मय्येव मनोयस्य तादृशो भव मद्भक्तः मयि स्नेहयुक्तो भव मद्याजी मम वासुदेवस्य पूजनशीलो भव मामीश्वरं श्रीकृष्णं नमस्कुरु इति ते भवदर्थं सत्यं तथ्यं प्रतिज्ञां करोमि यतः यस्मात् त्वं अर्जुनः मे वासुदेवस्य प्रियः इष्टोऽसि ॥

तू मुझ में ही मन रखने वाला हो, मेरा ही भक्त हो, मेरा ही पूजन करने वाला हो और मुझ को ही नमस्कार कर, मैं सत्य प्रतिज्ञा करता हूं कि ऐसा करने से तू मुझको ही प्राप्त होगा, क्योंकि तू मुझे अत्यन्त प्रिय है ॥ ६५ ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्व पापेभ्यो मोक्षयिष्यामि मा शुचः

त्वं अर्जुनः सर्वधर्मान् वासनाविधायकान् परित्यज्य त्यागं कृत्वा एकं केवलं मां वासुदेवं शरणं आश्रयं व्रज गच्छ अहं श्रीकृष्णः त्वां सर्वपापेभ्यः सर्वदुरितेभ्यः मोक्षयिष्यामि मा शुचः शोकं मा कुरु ॥ ६६ ॥

तू सब धर्मों को छोड़ कर केवल एक मेरी अनन्य शरण को प्राप्त हो, मैं तुझे सारे पापों से मुक्त कर दूंगा, शोक मत कर ॥ ६६॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥

इदं शास्त्रं ते त्वया अतपस्काय तपश्चरणरहिताय (स्वाचारहीनाय) न वाच्यं न कथनीयं अभक्ताय भक्तिरहि-

चाय कदाचन कदाऽपि न च वाच्यं न वक्तव्यं अशुश्रूषवे गुरुसेवा मकुर्वते न च वाच्यं यो जनः मां वासुदेवं अभ्यसूयति निन्दां करोति च तस्मै दुष्टजनाये न वाच्यम् ॥ ६७ ॥

तुझे कहा हुआ यह परम रहस्य, तपरहित, भक्ति रहित, सेवा रहित और मुझ से द्वेष करने वाले को कभी नहीं कहना चाहिये ।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥

यो विद्वान् इदं यथोक्तं परमं उत्कृष्टं गुह्यं अतीवगोप्यं गीताशास्त्रं मद्भक्तेषु मयि वासुदेवे भक्तिमत्सु अभिधास्यति ग्रन्थोऽर्थतश्च वक्ष्यति स विद्वान् परां उत्कृष्टां भक्तिं कृत्वा इति असंशयः सन्देहरहितः मां वासुदेवमेव एष्यति मुक्तिं प्राप्स्यति ॥ ६८॥

जो पुरुष यह परम गुह्य ज्ञान मेरे भक्तों को सुनावेगा, वह भी मेरी पराभक्ति करके मुझको ही प्राप्त होगा, इस में संदेह नहीं ।

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥

तस्मात् मनुष्येषु मनेपु अन्यः कश्चित् मे मम वासुदेवस्य प्रियकृत्तमः प्रियकारकः न अभूत् नासीत् न च अस्ति इदानीं च न विद्यते न च भविता भविष्यति तस्मात् भुवि पृथिव्यां अन्यः (कश्चित् मे) प्रियतरः प्रियविधायकः न अभूत न अस्ति न च भविता इति सम्बन्धः ॥ ६९ ॥

सब मनुष्यों में इस से अधिक मेरा प्रिय करने वाला दूसरा कोई नहीं है, और पृथ्वी में मेरा उससे अधिक प्रिय कोई होगा भी नहीं ॥६९॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥

यश्च जनः इमं पूर्वोक्तं धर्म्यं धर्मयुक्तं आवयोः वासुदेवार्जुनयोः संवादं संवादरूपं ग्रन्थं अध्येष्यते पठिष्यति तेन ज्ञानयज्ञेन ज्ञानात्मक यज्ञेन अहं वासुदेवः इष्टः पूजितः स्यां इति मे मम श्रीकृष्णस्य संमतिः ॥ ७० ॥

तथा जो हम दोनों के धर्ममय संवाद रूप इस गीताशास्त्र को पढेगा, उसके द्वारा मैं ज्ञानयज्ञ से पूजित होऊंगा ऐसा मेरा मत है ॥७०॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपिमुक्तः शुभांल्लोकान् प्राप्नुयात्पुण्यकर्मणाम्

श्रद्धावान् श्रद्धालुः अनसूयः अनिन्दकः यो नरः ( इदं शास्त्रं ) शृणुयात् श्रवणं कुर्यात् अपि सोऽपि मुक्तः सन् पुण्य कर्मणां पुण्यविधातॄणां शुभान् लोकान् प्राप्नुयात् ॥७१॥

जो पुरुष श्रद्धावान् और द्वेष रहित होकर इसका केवल श्रवण करेगा, वह भी पापों से मुक्त होकर पुण्यवानों के शुभ लोकों को प्राप्त होगा ॥७१॥

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय । ७२ ॥

हे पार्थ ! हे अर्जुन ! कच्चित् किं एतत् शास्त्रं त्वया अर्जुनेन एकाग्रेण चेतसा मनसा श्रुतं आकर्णितं हे धनंजय ! कच्चित् किं ते तव अज्ञानसंमोहः अज्ञानात्मको मोहजालः ( भूयः ) नष्टः इति प्रश्नद्वयम् ॥ ७२ ॥

हे पार्थ, क्या तू ने यह मेरा वचन एकाग्र चित्त से सुना ? और हे धनंजय, क्या तेरा अज्ञान जन्य मोह नष्ट हुआ ॥७२॥

अर्जुन उवाच।

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव॥७३

हे अच्युत! हे भगवन् वासुदेव! त्वत्प्रसादात् तवानुग्रहात् मोहः भ्रमः नष्टः मया अर्जुनेन स्मृतिः लब्धा प्राप्ता इदानीं गतसंदेहः गतः यातः सन्देहो यस्यैवं भूतः स्थितोऽस्मि सन्देहरहित जातोऽस्मि अतः अस्मात् तव भगवतः वचनं वाक्यं करिष्ये विधास्ये ॥ ७३ ॥

हे अच्युत आपके कृपा प्रसाद से मेरा मोह नष्ट हुआ, मुझे स्मृति प्राप्त हुई और मैं संशय मुक्त हुआ स्थित हूँ आपकी आज्ञा पालन करूंगा।

संजय उवाच।

इत्यहंवासुदेवस्य पार्थस्य च महात्मनः।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥७४॥

अहं संजयः वासुदेवस्य श्रीकृष्णमहात्मनः पार्थस्य

अर्जुनस्य च इति इमं अद्भुतं विचित्रं रोमहर्षणं रोमाञ्चजनकं संवादं अश्रौषम् श्रुतवान्नस्मि ॥ ७४ ॥

हे धृतराष्ट्र इस प्रकार मैंने भगवान् वासुदेव तथा महात्मा अर्जुन के इस अद्भुत और रोमांचकारक संवाद को सुना ॥७४॥

व्यासप्रसादाच्छ्रुतवान् एतद् गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात् साक्षात्कथयतः स्वयम्

स्वयं कथयतः भाषयतः साक्षात् प्रत्यक्षरूपेण वर्तमानात् योगेश्वरात् श्रीकृष्णात् एतत् पूर्वोक्तं परं गुह्यं अतीव गोप्यं योगं व्यासप्रसादात् व्यास अनुग्रहात् अहं संजयः श्रुतवान् अस्मि ॥ ७५ ॥

इस परम गुह्य योग को महा मुनि व्यासजी के प्रसाद से साक्षात् योगेश्वर श्रीकृष्ण के मुख से कहते हुए मैंने स्वयं सुना है ॥७५॥

राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।

केशवार्जुनयोः पुण्यं हृष्यामि चमुहुर्मुहुः ॥७६॥

हे राजन् केशवार्जुनयोः वासुदेवार्जुनयोः इमं पूर्वोक्तं अद्भुतं विस्मयकारकं पुण्यं पवित्रं संवादं वार्तालापं संस्मृत्य संस्मृत्य स्मरणं कृत्वा स्मरणं कृत्वा च मुहुः मुहुः वारं वारं हृष्यामि प्रसन्नो भवामि ॥ ७६ ॥

हे राजन्, केशव और अर्जुन के इस कल्याणकारक तथा अद्भुत संवाद को मैं पुनः २ स्मरण करके वारंवार हर्षित होता हूं ॥७६॥

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः

हे राजन् तत् पूर्वोक्तं अत्यद्भुतं अतीवाश्चर्यप्रदं हरेः वासुदेवस्य रूपं स्वरूपं संस्मृत्य संस्मृत्य स्मरणं कृत्वा स्मरणंकृत्वा मे मम महान् विस्मयः आश्चर्यः जायते पुनः पुनः वारं वारं हृष्यामि प्रसन्नो भवामि च ॥७७ ॥

और हे राजन्, श्रीहरि के उस अति अद्भुत विश्वरूपकाभी पुनः पुनः स्मरण करके मुझे महान् आश्चर्य होता है, और मैं बारंबार हर्षित होता हूं ॥७७॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८

यत्र यस्मिन् पक्षे योगेश्वरः योगप्रभुः कृष्णः वासुदेवो भगवान् अस्ति यत्र च पार्थः पृथुपुत्रः धनुर्धरः कोदण्डधरः अर्जुनश्चास्ति तत्र तस्मिन्नेव पक्षे स्थाने वा श्रीः लक्ष्मीः विजयः भूतिः ऐश्वर्यं ध्रुवा निश्चला नीतिः इति मम संजयस्य मतिः संमतिः इति निश्चयः अत्र सन्देहो न कर्तव्य इति ॥७८

जहां योगेश्वर श्रीकृष्ण है और जहाँ धनुषधारी अर्जुन है, वहीं पर श्री, विजय, विभूति और अचल नीति है: ऐसा मेरा मत है ॥७८॥

इति ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यास नामाष्टादशोऽध्यायः १८ ॥

# प्रार्थना।

हे परमेश्वर! परमपिता परमात्मन् आप हमारे संरक्षक और सहायक तथा प्रेरक हैं। हम सब मिल कर एक तुम्हारी ही भक्ति करें, तुम्हारे ही चरणोंमें श्रद्धा भक्ति पूर्वक शिर झुकाते रहें और एक मात्र तुम्हारी ही सहायता चाहें। ये हमारे आत्मा जगदीश्वर! आप अनन्त क्षमा स्वरूप और दयालु हो। हे करुणासागर! हम तुम्हें छोड़ कर और किस की शरण लें। केवल एक मात्र तुम ही हमारे आधार और अधिष्ठान हो। हे हमारे सर्वस्व परमात्मन्! हम तुम्हारे पवित्र चरणों को बारम्बार प्रणाम करते हैं। आप ही हमारी टेक हो और पत रखने वाले हो, प्रतिज्ञा पर आप ही दृढ़ता के स्थिति स्थापक हो है अनन्त अपार प्रकाश स्वरूप, पवित्र ज्योति परमात्मन्! आप हम को श्रेयस्कर और श्रेष्ठ मार्ग से अपनी प्राप्ति की ओर ले चलिये, आप ही हमारे सत् पथ प्रदर्शक नेता तथा संचालक हैं हे अन्तर्यामिन्! हम तेरे हैं, हम को अन्तर्यामी रूप से प्रेरणा करो कि हम तेरे उस मार्ग पर चलें कि जिस पर तेरे पूर्ण भक्त ऋषि महर्षि चले हैं। और जिस मार्ग द्वारा तुम को प्राप्त हो चुके हैं। जिन पर तुम्हारा परम अनुग्रह तथा प्रसाद हुआ हो। और हे सर्व शक्तिमान्! हमारे प्रभु हमें उस मार्ग

से कभी मत चलाओ जिस पर तेरे अभक्त चलें हों और तुम्हारी प्रसन्नता से हम कभी वंचित न रहें हे प्रभु ! तुम हम को अन्तर्यामी प्रेरक सखा हो, हम तुम्हारी ही शरण हैं। अतएव हमारी रक्षा करो। हे जगदीश्वर जगदाधार ! हम को वह पवित्र दृढ़ात्मिका बुद्धि प्रदान करो, कि जिस में केवल एक मात्र तुम्हारा ही दृढ़ विश्वास तथा निश्चय हो। हम को वह अहंकार दो जिसमें, हम अपना आपा तुम को कह सकें, मन में तुम्हारा शिव संकल्प उठे, चित्त में तुम्हारा ही चिन्तन रहै, हमारे नेत्र और हृदय खुले हों, और उन पर तुम्हारा पूरा अधिकार हो। हमारे सब के द्वारा केवल आप की जय हो, आप हमारे जीवन के नियन्ता प्राण स्वरूप हो। हे स्वामिन् ! हमारी प्रत्येक क्रियायें और चेष्टायें आप के चरणों में समर्पण होवें। हमारे भाव महान् उदार तथा गम्भीर हों। हम सब प्राणी मात्र को अपना ही आत्म स्वरूप देखें। और सब की भलाई में अपनी भलाई समझें, अहर्निश परोपकार में रत रहें, और तुम्हारी ही भक्ति का सर्वत्र प्रचार करते हुये, अपने जीवन को सफल करते हुये, तुम्हारे पवित्र ज्योतिर्मय चरणों के समीप बैठने के योग्य बनें। हे पतितपावन दीनों के उद्धार करने वाले परमात्मन् ! हम को ऐसी उदार बुद्धि दीजिये कि जिस से हम दीन दुखियों की सहायता सच्चे हार्दिक भाव से करें। हमें तुम्हारे प्रेम में ही जीवन प्रिय हो। हे विश्वात्मा !

विश्वस्वरूप !! हम तुम्हारे भक्ति मार्ग पर चलते हुए महान् दुःखों को भी सानन्द सहन कर सकें, तुम्हारे भजन में दृढ़ रहें, सब के साथ पवित्र प्रेम करें। हे प्रेमाकर! हम सब को अपना ही आत्मा जानें, हमारा आचरण सब की भलाई के लिए हो। हे अनन्त शक्ति परमात्मन् ! आप की शक्तियें अपरिमित बे अन्दाज हैं, तुम्हारी दान से कोई बढ़ नहीं सकता है। तुम्हारी दक्षिणा ज्योति की तरह सब के ऊपर जगमगा रही है। तुम्हारी शक्तियों और सच्चे उदार वचनों. मेहरबानियों का कोई नियन्ता नहीं है। कोई नहीं कह सकता कि उस ने मुझे नहीं दिया है। तुम्हारे द्वार से कोई निराश नहीं गया है। सब ने अभीष्ट फल प्राप्त कर जीवन का फल पाया है। हे राम कृष्ण आदि अनन्त नामों और रूपों के धारण करने वाले, हमारे सच्चे प्रभु, ! अन्त में हमारी यही प्रार्थना है है. कि हम तेरे सच्चे भक्त बनें, तेरी ही भक्ति का प्रचार करें, हम सब के द्वारा तुम्हारी ही इच्छा पूर्ण हो, सर्वत्र तुम्हारा ही राज्य हो। हे अनन्त अपार ज्ञानानन्द स्वरूप ! आप को हमारा अनन्त धन्यवाद हो और आप का हम को आशीर्वाद हो । अतएव सांजलि रह आप को भूयोपि नमस्कारों पर नमस्कार है।

॥ ओ३म् शंनरोतु शंकर. ॥

क

ओ३म्

# भक्ति ।

नामक मासिक पत्रिका श्री भगवद्भक्ति आश्रम रामपुरा रेवाड़ी से प्रकाशित हुई है। इस में भगवद्भक्ति, गुरु भक्ति, पितृ भक्ति, गौ भक्ति, वेदान्त फिलासिफी, बड़े २ महात्माओं की उत्कृष्ट वाणियां तथा भजन और मनुष्योपकारी अनुभूत औषधियों के अव्यर्थ प्रयोग रहेंगे। ग्राहक महाशयों को शीघ्र ही पर्याप्त संख्या में इस के ग्राहक बनना चाहिये। जिस से यह पत्रिका अपने गुरुतर, गूढ़ तथा महान् उद्देश्यों को जन साधारण में पहुंचाने में समर्थ हो। वार्षिक मूल्य केवल २) रुपये।

## बिना गुरु के सिद्धान्त कौमुदी।

### भाषा फक्किका प्रकाश।

इस पुस्तक में बहुत ही सरल भाषा में तथा प्रश्नोत्तर के रूप में सिद्धान्त कौमुदी की गूढ़ फक्किकाओं को समझाया गया

है "मुनित्रय" से लेकर प्रत्येक पदार्थ को स्पष्ट किया है विद्यार्थियों के बड़े लाभ की पुस्तक है इससे विद्यार्थी लघु पढ़कर स्वयं सिद्धान्त कौमुदी पढ़ सकता है। मूल्य ॥)

## ज्ञान धर्मोपदेश।

इस छोटी सी पुस्तक में वेद शास्त्र तथा धर्म का सार संग्रहीत है और वेदान्त की उत्तम कविताओं का संग्रह है। मूल्य-)॥।

## शब्द सदाचार संग्रह।

इसमें कबीर सूरदास आदि महात्माओं की वाणियोंका संग्रह है मूल्य -)॥

## वेदोपनिषद्।

इस पुस्तक में ईश, कठ, केन मुण्डक, और माण्डूक्यादि उपनिषदों तथा वेदों के उत्तम उत्तम मन्त्रों का अर्थ सहित संग्रह है। मूल्य ।-)

## सत्य शब्द संग्रह।

इस पुस्तक में उत्तम २ महात्माओं की वाणियों का

ओ३म्

# भक्ति ।

नामक मासिक पत्रिका श्री भगवद्भक्ति आश्रम रामपुरा रेवाड़ी से प्रकाशित हुई है। इस में भगवद्भक्ति, गुरु भक्ति, पितृ भक्ति, गौ भक्ति, वेदान्त फिलासिफी, बड़े २ महात्माओं की उत्कृष्ट वाणियां तथा भजन और मनुष्योपकारी अनुभूत औषधियों के अव्यर्थ प्रयोग रहेंगे। ग्राहक महाशयों को शीघ्र ही पर्याप्त संख्या में इस के ग्राहक बनना चाहिये। जिस से यह पत्रिका अपने गुरुतर, गूढ़ तथा महान् उद्देश्यों को जन-साधारण में पहुंचाने में समर्थ हो। वार्षिक मूल्य केवल २) रुपये।

## बिना गुरुके सिद्धान्त कौमुदी।

### भाषा फक्किका प्रकाश।

इस पुस्तक में बहुत ही सरल भाषा में तथा प्रश्नोत्तर के रूप में सिद्धान्त कौमुदी की गूढ़ फक्किकाओंको समझाया गया

है "मुनित्रयं" से लेकर प्रत्येक पदार्थ को स्पष्ट किया है विद्यार्थियों के बड़े लाभ की पुस्तक है इससे विद्यार्थी लघु पढ़कर स्वयं सिद्धान्त कौमुदी पढ़ सकता है। मूल्य ॥)

## ज्ञान धर्मोपदेश।

इस छोटी सी पुस्तक में वेद शास्त्र तथा धर्म का सार संग्रहीत है और वेदान्त की उत्तम कविताओं का संग्रह है। मूल्य ⌐)॥।

## शब्द सदाचार संग्रह।

इसमें कबीर सूरदास आदि महात्माओं की वाणियोंका संग्रह है मूल्य ⌐)।

## वेदोपनिषद्।

इस पुस्तक में ईश, कठ, केन मुण्डक, और माण्डूक्यादि उपनिषदों तथा वेदों के उत्तम उत्तम मन्त्रों का अर्थ सहित संग्रह है। मूल्य ।⌐)

## सत्य शब्द संग्रह।

इस पुस्तक में उत्तम २ महात्माओं की वाणियों का

संग्रह है। वेदान्त विषय की उच्च कोटि की कवितायें, कवित्त तथा सवैये हैं। अन्त में विचार सागर है। यह भक्त जनों के नित्य पाठ करने की बड़ी उत्तम पुस्तक है। मूल्य ।=)

मैनेजर !

भक्ति प्रेस भगवद्भक्ति आश्रम रामपुरा (रेवाड़ी)